इत्यारोपितमेव सम्बन्धत्वं संयोगे स्वीकृत्य "इमौ संयुक्तौ" इत्यादिव्यवहारा उपपादनीयाः[27]। एवमेव वाच्यवाचकभावजन्यजनकभावस्वरूपतादात्म्यकालिकप्रभृतयः सम्बन्धा अप्यत्र दर्शने स्वीक्रियन्त एव। तत्र जातिगुणक्रियाणां स्वाश्रये समवायः, पुंस्त्वादीनां तु स्वाश्रये स्वरूपमेव सम्बन्धः। नान्तरीयकतया सोऽपि प्रातिपदिकार्थतया स्वीक्रियत एव।

व्याकरणदर्शने गुणस्वरूपन्तु "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" इत्येवं[28] लक्षणलक्षितं स्वीक्रियते। इदन्तु वोतो गुणवचनादिति[29] सूत्रोपयोगि। "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इत्यादिसूत्रोपयोगि गुणवचनं तु आकडारसूत्रे[30] भाष्ये निर्दिष्टमस्ति। तत्र हि – जातिसंज्ञाऽव्ययकृदन्ततद्धितान्तसमस्तसर्वनाम- संख्याशब्दातिरिक्तः शब्दो गुणवचनशब्देन गृह्यत इति स्पष्टीकृतमुद्योते।

द्रव्यवद् गुणोऽपि दर्शनेऽत्र द्विविधः – लौकिकः शास्त्रीयश्च। तत्राद्यस्तावद् रूपरस- गन्धस्पर्शशब्दादयो न्यायादिदर्शने प्रसिद्धाः। शास्त्रीयस्तु "अदेङ्गुणः" इत्यत्र सङ्केतित अकारादिः। क्वचित्तु विशेषणतया भासमानो धर्मो गुणपदेन गृह्यते, "तृतीया तत्कृतार्थेन गुणवचनेन"[31] इत्यादौ। पाणिनीयसूत्रेषु[32] रूपादयो गुणविशेषा अपि बहुशो व्यवहृताः सन्ति। तथा हि – "रसादिभ्यश्च" इति सूत्रे रसग्रहणमस्ति। आदिपदेन रूपगन्धस्पर्शस्नेहप्रभृतयो गृहीताः सन्ति। किञ्च, "सत्यापपाशरूप." इति सूत्रे रूपग्रहणम्, "गन्धस्येदुत्पूति." इत्यत्र गन्धग्रहणम्, "द्रवमूर्त्तिस्पर्शयोः श्यः" इत्यत्र स्पर्शशब्दस्य, "शब्दवैरकलहाभ्र." इत्यत्र ध्वनिरूपशब्दस्य, "स्नेहे तैलच्" इत्यत्र स्नेहशब्दस्य, "परिमाणान्तस्यासंज्ञाशाणयोः" इत्यत्र परिमाणशब्दस्य, "संख्याया अतिशदन्तायाः कन्" इत्यत्र संख्याशब्दस्य, "पृथग्विनानानाभिः" इत्यत्र पृथक्शब्दस्य, "तस्य निमित्तं संयोगोत्पातौ" इत्यत्र संयोगस्य, "कालविभागे चानहो-रात्रणाम्" इत्यत्र विभागस्य, "परश्च" इत्यत्र परत्वस्य, "पूर्वपरावरदक्षिणोत्तरापराध राणि" इत्यत्र परत्वापरत्वयोः, "बह्यादिभ्यश्च" इत्यत्र बह्यादिगणे गुरुत्वस्य, "द्रवमूर्त्तिस्पर्शयोः" इत्यत्र द्रवत्वस्य, "सुखादेभ्यः कर्त्तृवेदानायाम्" इत्यत्र सुखस्य, "दुःखात्प्रातिलोम्ये" इत्यत्र दुःखस्य, "धातोः कर्मणः समानकर्त्तृकादिच्छायां वा" इत्यत्राच्छायाः, "क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" इत्यत्र कोपस्य, "धर्मं चरति" इत्यत्र धर्मस्य, "अधर्माच्चेति वक्तव्यम्" इत्यत्र। धर्मस्य, "भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यत्र ज्ञानयत्नयोः, "संस्कृतम्" इत्यत्र संस्कारस्य च व्यवहारः। एवमेवान्येषां च तत्र तत्र व्यवहारः कृत एव। यद्यपि अन्तःकरणपरिणामरूपा वृत्तिरेव ज्ञानावच्छेदकतया ज्ञानपदेन व्यवह्रियते, सा च द्रव्यमेव, अन्तःकरणस्य द्रव्यतया तत्परिणामस्यापि तत्त्वात्। तथापि वृत्तौ चित्प्रतिबिम्बनं गुणत्वेन बोद्ध्यम्, एतदेव प्रकटता इत्युच्यते।

न्यायदर्शने चलनात्मकं कर्म क्रियापदेन व्यवह्रियते, किन्तु व्याकरणदर्शने नहि चलनात्मिकैव क्रिया, अपितु धातुमात्रस्य वाच्यः फलभिन्नोऽर्थः क्रिया इत्युच्यते। भाष्ये च कारकाणां प्रवृत्तिविशेषः क्रियाशब्देनोक्तः।[33] अत्र कर्मणोऽपि व्यापारः क्रियात्वेन गृहीतः, स च फलरूपः। एवं च फलव्यापारयोरुभयोरपि क्रिया इति व्यवहारः, सकलधातुवाच्यता च। अतश्चोक्तम् – "फलव्यापारयोर्धातुः"[34] इति। "भूवादयो धातवः" इति सूत्रयता[35] भगवता पाणिनिना उभयोरेव धातुवाच्यत्वं सूचितम्। तत्र भूश्च वाश्चेति भूवौ, आदिश्च आदिश्चेत्यादी, भूवौ आदी येषां ते भूवादयः। अत्रैक आदिशब्दो व्यवस्थावाची, अपरश्च प्रकारवाची। तत्र वाप्रकारा ये भूव्यवस्थितास्ते धातव इत्यर्थे प्रकारः सादृश्यम्, तच्च क्रियावाचित्वेन, वाधातोर्गतिरूपक्रियावाचित्वात्। एवं च क्रियावाचिनो भ्वादयो धातुसंज्ञा इत्यर्थः फलितः। भूसदृशा ये वादयस्ते धातव इत्यर्थपक्षे तु भूधातोः सत्तारूपफलवाचकतया फलवाचित्वेन सादृश्यमादाय फलवाचिनो वादयो धातव इत्यर्थः सम्पद्यते।

"क्रियानामेयमत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः" इति[36] भाष्योक्त्या ज्ञायते यदस्याः क्रियायाः प्रत्यक्षं कर्त्तुं न शक्यते। तत्र च बुद्ध्या प्रकल्पितसमूह- रूपायास्तस्या अप्रत्यक्षत्वेऽपि

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

''पश्य मृगो धावति'' इत्यादिलोकव्यवहारेण एकैकक्षणभाविन्या अवयवभूतायास्तु प्रत्यक्षं भवत्येवेति ज्ञेयम्।

''ह्रस्वो नपुंसके प्रातिपदिकस्य''[37] ''तस्माच्छसो न: पुंसि:''[38] इत्यादिसूत्रप्रामाण्यात् लिङ्गस्यापि प्रातिपदिकार्थत्वमवसीयते। न चान्वयव्यतिरेकसहचाराभ्यां विभक्तेरेव तद् वाच्यं स्यादिति शङ्क्यम्, ''लिङ्, धुग्, रमा, वारि'' इत्यादौ विभक्त्यभावेऽपि तद्बोधात्, प्रातिपदिकेनैव तयो: सहचारयोर्योजनीयत्वात्। अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वरजस्तमसां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यं व्याकरणदर्शनेऽभिमतम्।[39]

एकत्वादिका: संख्या अपि प्रातिपदिकार्थतया मन्यन्ते शब्दशास्त्रविद्भि:। अत एव ''द्वयेकयोर्द्विवचनैकवचने'',[40] ''बहुषु बहुवचनम्''[41] इत्यनयो: सार्थक्यम्। संख्यानकरणत्वं संख्याया लक्षणम्। सा चेयं संख्या द्विविधा- एकालौकिकी एकत्वद्वित्वादिका, अपरा बहुगण इत्यादिका शास्त्रीया संख्या।

एवमेव कारकमपि प्रातिपदिकार्थ:, ''कर्मणि द्वितीया'' कर्त्तृकरणयोस्तृतीया'' इत्यादि- शास्त्रमत्र प्रमाणम्। तत्र क्रियाजनकत्वेन विवक्षितत्वमिति कारकस्य लक्षणं शब्दशास्त्रे प्रसिद्धम्। कर्तृत्वकर्मत्वाद्यन्यतमशक्तिरूपमपि कारकमित्यपि एक: पक्ष:। अत एव शक्तिद्वयमध्य इत्याद्यर्थकम् ''सप्तमीपञ्चम्यौ कारकमध्ये'' इति सूत्रं सङ्गच्छते। कर्त्तृकर्मकरणसम्प्रदानापादानाधिकरणानि षट् कारकाणि लोकप्रसिद्धानि। अत्रेदमवधेयम् - कर्त्तृकर्मकरणाधिकरणेषु यथा कृधातुरनुस्यूतोऽस्ति, न तथा सम्प्रदानापादानयो:। अतश्च तयोर्न वास्तवं कारकत्वमपितु कारकत्वप्रयुक्तकार्यसम्पत्त्यर्थं व्यावहारिकमेव। किञ्च यथा कर्त्तृव्यापाराविवक्षायां कर्मकरणाधिकरणानामपि कर्तृसंज्ञा भवति, न तथा सम्प्रदानापादानयो:। न हि भवति ''ब्राह्मणाय ददाति'' इत्यर्थे ''ब्राह्मणो ददाति'' इति, ''ग्रामादागच्छति'' इत्यर्थे ''ग्राम आगच्छति'' इति वा। अतोऽपि तयोरौपचारिकं कारकत्वं बोद्ध्यम्।

तदेवं संक्षेपेण प्रातिपदिकार्थमभिधाय धातुरूपप्रकृत्यर्थविमर्श: क्रियते। प्रातिपदिकवद्धातोरपि बहवोऽर्था भवन्ति। उक्तञ्च ''अनेकार्था धातव'' इति। दधाति बहूनर्थानिति धातुरिति योगव्युत्पत्तिरप्यत्रानुकूल्यं भजते। ते चाऽर्था: क्रियात्व-क्रिया-कारक-संख्या-कालरूपा: पञ्च- संख्याका:।[42] अत एव ''भावकर्मणो:'' इत्यादे: नियमत्वं भाष्यसम्मतं सङ्गच्छते। अत एव च ''अजर्घा:'' ''अवेत्'' इत्यादौ च धातोरेव सर्वबोध:। न च ''व्यतिसे'' इत्यत्र प्रत्ययादेव सर्वबोध:, एवम् ''अस्य स्त्री ई:'' इत्यादौ प्रत्ययादेव सर्वबोधात् प्रत्ययस्यैव तद्वाचकत्वमिति वाच्यम्, बाहुल्येन धातुप्रातिपदिकाभ्यामेव सुप्तिङर्थबोधेन तयोरेव वाचकत्वमवसेयम्। पाणिनीयदर्शने क्रियापदेन फलं व्यापारश्चेत्युभयमपि ग्राह्यमिति पूर्वोक्तम्। क्रियाकारकसंख्याकालविषयेऽपि तत्तद्धर्मास्तेषां स्वाश्रये सम्बन्धाश्च वाच्यतया अवगन्तव्या:। एवं शब्दस्य स्वरूपम्, तद्वृत्तिधर्म:, शब्दत्वव्याप्यो भूशब्दत्वादि:, तत्सम्बन्धश्चापि वाच्या एव।

अथ च, प्रातिपदिकवाच्या धातुवाच्या च क्रिया। तत्रेयान् विशेष: - प्रातिपदिकवाच्या क्रिया सत्त्वरूपा लिङ्गसंख्यान्वयिनी, धातुवाच्या तु असत्त्वरूपा तयोरनन्वयिनी इति। उक्तञ्च श्रीहरिणा - ''असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते''[43] इति। अत्र तिङ्पदैरित्यस्य तिङ्- प्रकृतिभूतधातुपदैरिति व्याख्यानं करणीयम्। अतो न भूवादिसूत्रस्थभाष्यविरोध:।

श्रीरामाज्ञापाण्डेयस्तु[44] आह - एकैव परावाणी व्याकृताव्याकृतरूपभेदेन द्वेधा विभज्यते। तत्र पश्यन्त्यादित्रियीं व्याकृतात्मिकां वाणीमाश्रित्य व्याकरणविषय: प्रकृतिप्रत्ययादिविभाग: प्रवर्त्तते। पश्यन्ती-प्रतिभा-प्रणवेत्यादय: शब्दा: व्याकरणापरपर्याया एव। प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। तत्र नामरूपात्मकौ शब्दार्थौ शक्तिशक्तिमन्तौ जडचेतनात्मकौ बोध्यौ। सच्चिदानन्दस्वरूपा वाग् विद्योतते - ''स्वरूपज्योतिरेवान्त: परावागनपायिनी''[45] इति। पश्यन्त्या एव रूपद्वयं चकास्ति - प्रकृतिरूपमुपादानकारणमेकम्, अपरं च प्रत्ययरूपं निमित्तकारणमिति। इदञ्च परम्पराद्वयं पश्यन्तीमेव कामधेनुमाश्रित्य समुपक्रान्तम्। कालाख्य-स्वातन्त्र्यशक्तिस्तत्रैव

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विराजते। अविद्यादयः शक्तयोऽपि तद्विजृम्भितम्। सैव पश्यन्तीरूपेण सर्वशब्दबीजा, प्रतिभा- रूपेण च सकलार्थप्रसवेत्यभ्युपगन्तव्यम्। एतत्प्रकाशेनैवान्ये प्रकाशाः प्रकाशन्तेऽग्निसूर्यादयः।

तदेवं स्थूलदृष्ट्या व्याकरणशास्त्रीयप्रकृतिप्रत्ययादिप्रक्रिया यद्यपि भाषेयी बुद्ध्यते, किन्तु सूक्ष्मदृष्ट्या तासां प्रक्रियाणां दार्शनिकं महत्त्वमप्यस्तीति सुधीभिर्विभावनीयम्।

## सन्दर्भाः

1. दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।
   अश्रद्धामनृते दद्याच्छ्रद्धां सत्ये प्रजापतिः।। शुक्लयजु. 19.17
2. ''कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान्प्रविभज्य''। प.ल.म., शक्तिनिरूपणम्।
3. स्वरूपज्योतिरेवान्तःपरावागनपायिनी। वाक्य. 1.143, अपि च,
   क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
   प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा।। ल.म.-पृ. 49
4. छान्दो. 6.3.2 5. बृहदा. - 4.1.2 6. शा०भा० 1.3.8, सू. 28 7. वा.प.टी. 1.1
8. अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।
   अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः।।
   कार्यकारणभावेन योग्यभावेन च स्थिताः।
   धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु।। वा.प. 1.24.25
9. वै.भू.सा., नामार्थप्रकरणम्, का. 25
10. अवयवावयविनोः जातिव्यक्त्योः गुणगुणिनोः क्रियाक्रियावतोः नित्यद्रव्यविशेषयोश्च यः सम्बन्धः, स समवायः। समवायत्वं नित्यसम्बन्धत्वम् - न्या.सि.मु.प्र.ख., का.-1
11. अनुयोगिप्रतियोग्यन्तरस्वरूपसम्बन्धविशेषत्वं स्वरूपसम्बन्धत्वम्। अथवा,
    सम्बन्धान्तरेण विशिष्टप्रतीतिजननाऽयोग्यत्वं स्वरूपसम्बन्धत्वम्। परि.द.पृ.-27
12. तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। भेदाभेदसमनियतम्। प.ल.म., शक्तिनिरूपणम्
13. पा.व्या. प्रमाणसमीक्षा, 325 पृ.1
14. म.भा.प्र.उ. 1.2.64
15. म.भा. 4.1.63
16. वा.प. 3.1.15
17. वै.भू.सा.का. - 51
18. म.भा. 4.1.3, 5.1.119
19. वै.सि.ल.म., बौ.नि. पृ. 347
20. वा.प. 3.4.3
21. पा.सू. 2.5.15
22. पा.अ. सूत्राणि
23. पा.अ. 5.1.89
24. पा.सू. 5.2.93
25. पा. सू. 3.2.50
26. म.भा.उ. 2.3.66
27. वै.सि.ल.म.वि.नि. षष्ठीविभक्तिः
28. म.भा.प्र.उ. 4.1.44
29. पा.सू. 4.1.44
30. म.भा.उ. 1.4.1
31. पा.स. 2.1.30
32. पा. अष्टा.
33. म.भा. 1.3.1
34. वै.भू.सा.का. 2
35. पा.सू. 1.3.1
36. म.भा. 1.3.1
37. पा.सू. 1.2.47
38. पा.सू. 6.1.103
39. ल.श.शे. स्त्री.प्र.प्रक. स्त्रियाम्-इति सूत्रे
40. पा.सू. 1.4.22
41. पा.सू. 1.4.21
42. ल.श.शे.का.प्र. अनिभिहितसूत्रे
43. वै.भू.सा.का. 2
44. व्या.द.भूमिका पृष्ठम् 'आ'
45. वा.प. 1.143

● Rashtriya Sanskrit Sansthan, Mumbai Campus, K.J. Somaiya Vidyapeetha, Politechnic Building (IInd Floor), Vidyavihar (E) Mumbai - 400 077



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# पाणिनि-कात्यायनयोः 'भाषायाम्' इति प्रयोग-विज्ञानम्

रमेश झा

(The paper deals with the purpose of the term *bhāṣāyām* used by *pāṇini* and *Kātyāyana* in their magnum opus *Aṣṭādhyāyī* and *Vārttikas* respectively. In all ten *sūtras* and *vārttikas* are discussed with examples from vedic as well as classical literature where the term भाषायाम् is used. Since *vyākaraṇa* is called *bhāṣāśāstra*, the term *bhāṣāyām* plays an important role thrughout this *śāstra*.)

सुविदितमेव यद् व्यवहारातीता भाषा व्याकरणसाहाय्यमन्तरेण न शक्या प्रतिपत्तुमिति।

*शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।*
*वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।*

इत्यभियुक्तोक्तेषु शक्तिग्राहकेषु व्यवहारस्तावच्छक्तिग्राहकशिरोमणिरिति सर्वेषां नैकमत्येनाभ्युपगमः। कमपि शब्दमजानानः शिशुर्नान्यैरुपायैः शक्यो बोधयितुम् ऋते व्यवहारात्। तत्तच्छब्दैस्तेषु तेषु पदार्थेषु प्रवृत्तिनिवृत्ती वयोवृद्धानामनवरतं पश्यन् स भाषायां व्युत्पद्यत इति सततं प्रत्यक्षीकुर्मः। अत एव येषां बालानामग्रे माता-पितादयः सर्वेऽपि वयोवृद्धाः संस्कृतेनैव व्यवहरन्ति, ते विनाप्यध्ययनं संस्कृत एव व्युत्पन्नाः संस्कृतमेव भाषमाणा अवलोक्यन्ते, येषां तु समक्षं सर्वेऽप्याङ्गलभाषामेव सततमुच्चारयन्ति, ते विनाप्यध्ययनम् आङ्गलभाषां बुध्यन्ते चोच्चारयन्ति च तामेवेति सुप्रत्यक्षम्। स एव व्यवहारः संस्कृतभाषाया एवंविधोऽद्यत्वे न दृश्यते, कैश्चिदेवातिविरलैर्बालव्युत्पत्त्यर्थमेवावलम्ब्यत इति तादृशमपवादं विहाय संस्कृतभाषाशिक्षणेनैवाधिगन्तव्या कालेऽस्मिन्। व्यवहारातिरिक्ता अन्ये उपमानाप्तवाक्य- वाक्यशेषविवृतिसिद्धपदसान्निध्याख्याः शक्तिग्रहोपायाः क्वचित्पदविशेष एवोपयुक्ता इति भाषाज्ञाने न पूर्णं साहाय्यमावहन्ति। ततश्च व्यवहारपदात् प्रच्युताया भाषायाः परिज्ञानाय कोशो व्याकरणश्चेति द्वावेव मुख्योपायौ। तत्रापि कोशो नाम्नां शक्तिग्रहमात्र उपयुज्यते, भाषायाः स्वरूपसंघटनं तु पाणिनि-कात्यायनयोः सूत्र-वार्तिकरूपव्याकरण एव सर्वात्मना आयतत इति निश्चप्रचम्।[1]

*यथा यथा हि पुरुषो व्याकृतिमवगाहते।*
*तथा तथा हि भाषाया विज्ञानं सम्प्रकाशते।।* (निपातार्थनिर्णय-भूमिका)

(As one goes on acquiring the knowledge of grammar deeper and deeper, he gains expert knowledge of the languages to the same degree.[2])

तथा च पाणिनिसूत्रे कात्यायनवार्तिके 'भाषायाम्' इति प्रयोगस्य कीदृशं विज्ञानमिति समासतः प्रतिपाद्यते-

**1. 'भाषायां सदवसश्रुवः' (3.2.108)**

सद, वस, श्रु इत्येतेभ्यः धातुभ्यः भूतसामान्येऽर्थे भाषायां विकल्पने लिड् भवति, तस्य च नित्यं क्वसुरादेशो भवतीत्यर्थः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अत्र क्वस्वादेशविधानात् भूतसामान्ये लिट् सदादिभ्योऽनुमीयते स विशेषविषयत्वाल्लुङो बाधकः[3] प्राप्नोतीति मत्वाह-भाषायामिति कैयटः।

भाषायामिति मत्वाह- विकल्पमात्रविधानेऽस्य सूत्रस्य तात्पर्यमिति भावः[4]। भाषायां सदादिभ्यो वा लिडिति। लिटः कानज्वा[5] इत्यतो 'वा' इत्यनुवर्तते। तच्च न क्वसुना संबध्यते, किं तर्हि, लिटा। तत्र वा-वचनात्पक्षे लुङ्भावः सिद्ध्यति। तत 'अनद्यतने लङ्'[6] 'परोक्षे लिट्'[7] इत्यत्रास्य सूत्रस्यानुवर्तनादनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड्भवतीत्यर्थः[8]

तेन 'निषेदुषीमासनबन्धधीरः'। 'अध्यूषुपस्तामभवज्जनस्य'। शुश्रुवान्। इति।।

**2. 'भाषायां धाञ्कृसृगमिजनि नमिभ्यः'**(वा. 622, पा. 3.21.161)

वार्तिकमिदम्। भाषायां घाञ्-कृ-सृष्ट-गमि-जनि-नमि इत्येतेभ्यः एभ्यः षड्भ्यः किकिनौ, तौ च लिड्वदिति वक्तव्यमित्यर्थः। काशिकायान्तु-'भाषायां घाञ् कृञ् सृजनिगमिभ्यः किकिनौ वक्तव्यौ'[9] तेन दधिः। चक्रिः। सस्रिः। जज्ञिः। जग्मिः। नेमिः। इत्यादयः सिद्ध्यन्ति।

महाभाष्ये तु- भाषायां '*घाञ्कृसृजनिनमिभ्यः*' भाषायां धाञ्कृसृजनिनमिभ्यः किकिनौ वक्तव्यौ।[10]

सर्वत्र भाषायामित्यनेन लौकिकव्यवहारप्रयुक्तविषये इत्यर्थः निष्कर्षतः गृह्यते। यतो हि अष्टा. 3.2.161 इति सूत्रेण छन्दसि इति विधीयते।

**3. 'भाषायां शासियुधिदृशिमृषिभ्यो युज्वाच्यः'** (वा. 766., पा. 3.3.130) भाषायामर्थे शासयुध् दृश्मृषधातुभ्यः युच्प्रत्ययो भवतीत्यर्थः।

अत्र भाषायामिति 'छन्दसि गत्यर्थेभ्यः' इत्यतः छन्दसीत्यधिकाराद् भाषायां न प्राप्नोतीति वार्तिकवचनमिति[11]।

तेन दुःखेन शास्यते इति दुःशासनः। दुःखेन युध्यते इति दुर्योधनः। दुःखेन दृश्यते इति दुर्दर्शनः। दुःखेन घर्ष्यते इति दुर्घर्षणः।

अतोऽत्र भाषायामित्यनेन लौकिकप्रयोगा एव गृह्यन्ते, न तु वैदिकप्रयोगा इति। तेन सुदोहनाम् अकृण्णोद्ब्रह्मणो गाम्, सुवेदनामकृणोद् ब्रह्मणो गामित्यादौ 'अन्येभ्योऽपि दृश्यते' (रु-3-130) इति सूत्रेणैव गतार्थत्वं जायते।

**4. 'सख्यशिश्वीति भाषायाम्'** (4.1.62)

सखिशब्दात् अशिशुशब्दाच्च स्त्रियां ङीश् निपात्यते भाषायाम्। लौकिकप्रयोगो[12] भाषा इत्यर्थः। तर्हि वेदे नैव स्यादित्यत आह-इति शब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः। अत्र प्रकारे इत्यनन्तरं वर्तते इति। प्रकारः सजातीयता। भाषायामित्यस्येति। स च इति शब्दः भाषायामित्यस्यानन्तरं सन्निवेश्यते इत्यर्थः। ततश्च भाषायां वेदे चेति फलितम्। नन्वेवं सति भाषयामिति व्यर्थमित्यत आह-तेन छन्दस्यपि क्वचित्। अत्र भाषाग्रहणेन भाषायां लोके सर्वत्र भवति, वेदे तु क्वचिदिति लभ्यत इत्यर्थः।

तेन सखी। अशिश्वी। 'आ धेनवो धुनयन्तामशिश्वीः' इति। 'अशिश्वी शिशुना विना' इत्यमरोऽपि सङ्गच्छते इति।

अत्र भाषायां किम् ? सख सप्तपदी भव' इति प्रयोगे मा भूदिति। अशिशुमिव मामयं शिशुरभिमन्यते।[13] इत्यत्रापि ङीष्-प्रत्ययो मा भूदिति भावः।

**5. 'मयट्वैतयोर्भाषायामभक्ष्याच्छादनयोः'**(4.3.143)

प्रकृतिमात्राद्वा मयट्प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोः भाषायां विषये यथा-यथं प्रत्ययेषु प्राप्तेषु इत्यर्थः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तेन अश्ममयम् आश्मनम्। मूर्वामयम् मौर्वम् इत्यादयः सिद्ध्यन्ति।

अत्र भाषायामिति किम् ? बैल्वः खादिरो वा यूपः स्यात्।[14] इति स्थले लौकिकप्रयोगाभावे मयट्-प्रत्ययो न भवति। भावोऽयं जायते यद् 'यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन यत्किञ्चिदेव काष्ठमुच्छ्रित्याऽनुच्छ्रित्य वा पशुरनुबन्द्धुम्। वेदे नियमः क्रियते-बैल्वः खादिरो वा यूपः स्यादिति।[15]

अतोऽत्र भाषायामित्यनेन लौकिकप्रयोगा एव गृह्यन्ते, न तु वैदिकप्रयोगा इति निष्कर्षो लभ्यते।

**6. 'विभाषा भाषायाम्'** (6.1.178)

षट्त्रिचतुर्भ्यः परा या झलादि-विभक्तिस्तदन्तस्योपोत्तमं भाषायामुदात्तं वा स्यादित्यर्थः। अथवा षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पद उपोत्तममुदात्तं भवति विभाषा भाषायां विषये।[16]

तेन पञ्चभिः सप्तभिः तिसृभिः चतुर्भिः। पक्षे 'षट्त्रिचतुर्भ्यो हलादिः' इत्यन्तोदात्तानि भवन्तीत्यर्थः। अत्र भाषायामर्थे उदात्तो भवति, अन्यत्र अन्तोदात्तो भवति।

**7. 'स्थे च भाषायाम्'** (6.3.20)

स्थे चोत्तरपदे भाषायां सप्तम्याम् अलुग् न भवतीत्यर्थः।

अत्र भाषायामित्यनेन 'कृष्णोऽस्याखरेष्ठः' (मा.सं.2.1) इत्यत्र मा भूत्। 'पूर्वपदात्संज्ञायामगः' इत्यनेन षत्वं न्यायात् 'तत्पुरुषे कृति' इत्यस्यैव। अत एव 'अनेकमन्यपदार्थे' इति सूत्रभाष्ये 'सप्तम्युपमानपूर्वपदस्य' इति वार्तिकव्याख्यावसरे कण्ठेस्थः कालो यस्येति विग्रहे कण्ठेस्थशब्दस्य समासत्वमभ्युपगम्य उपन्यस्तः सङ्गच्छते। यदा तु 'अमूर्धमस्तकात्' इत्यस्याप्ययं निषेधः स्यात्तर्हि तदसङ्गतिः स्यात्, लुक्प्रसङ्गात्[17]। अत एव 'भाषायाम्' इति पदेन विभाषा सिद्ध्यति।

तेन समस्थः, विषमस्थः, कूटस्थः, पर्वतस्थः इत्यादिस्थलेषु सप्तम्या अलुग् न भवतीति भावः।।

**8. 'प्रथमायाश्च द्विवचने भाषायाम्'** (6.2.88)

अत्र 'अष्टन आ विभक्तौ' इत्यतः आ-ग्रहणमनुवर्तते। 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदोः' इति च। तेनाह भाषायां प्रथमायाश्च द्विवचने परतो युष्मदस्मदोराकारादेशो भवतीत्यर्थः। 'भाषायाम्' इत्यस्य लौकिकव्यवहारविषये इत्यर्थः[18]।

अत्र भाषायामिति किम् ? 'युवं वस्त्राणि पीवसा वसाथे' (ऋ.1.152.1) इति वैदिकप्रयोगे मा भूत्।

तेन युवाम् आवाम् इत्यादौ युव अद् अम् आव अद् अम् इति स्थिते दकारस्य भाषायामर्थे प्रकृतसूत्रेण आत्वे पूर्वयोरकारयोः पररूपे ततः सवर्णदीर्घे, 'अमिपूर्वः' इति पूर्वरूपे रूपं सिद्धं भवति।

अतः अत्र भाषायामित्यनेन लौकिकप्रयोगे एव, न त्वलौकिकप्रयोगे इति भावः।

**9. 'पूर्वं तु भाषायाम्'** (8.2.98)

भाषायां विषये विचार्यमाणानां पूर्वमेव प्लवते-प्लुतो भवतीत्यर्थः। 'कोटिद्वयस्पृग्विज्ञानं विचार इतिः कथ्यते। विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते। इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि।

पूर्वेणैव सिद्धे नियमार्थमिदम्। तुशब्दस्त्वर्थतोऽवधारणार्थः। यथैवं विज्ञायेत 'पूर्वमेव प्लुत' इति। एवं विज्ञायि 'पूर्व भाषायामेव' इति। उदाहरणे 'तु' शब्दो वितर्के। प्रयोगापेक्षं पूर्वत्वम्। अत्र भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायति।

अस्योदाहरणम्- आहिर्नुऽरज्जुर्नु। लोष्टो नुऽकपोतो नु[19]।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**10. 'प्रत्यये भाषायां नित्यम्'** (वा. 26.8.4.45)

वार्तिकमेतत्। भाषालौकिकप्रयोगस्तत्र प्रत्यये विद्यमाने अनुनासिके परतः यरोऽनुनासिको नित्यं भवतीत्यर्थः[20]।

काशिकायान्तु 'यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्त्तव्यम्। तेन 'वाङ्मयम्' इत्यत्र 'नित्यं वृद्धशरादिभ्यः' इत्यनेन मयट्प्रत्ययो भवति। 'त्वङ्मयम्' इत्यत्र' नित्यं वृद्धशरादिभ्यः 'इत्यनेन मयट्प्रत्ययो भवति। 'त्वङ्मयम्' इत्यत्र 'मयड्वैतयोर्भाषायाम्' इत्यनेन विकारार्थे मयट्प्रत्ययः। व्यवस्थितविभाषाविज्ञानात् सिद्धमिति।[21]

तेन 'तन्मात्रम्' इत्यत्र तत् प्रमाणं यस्य तत्तन्मात्रं 'प्रमाणे द्वयसज्दघ्नम्मात्रचः' इति मात्रच्प्रत्ययः सिद्ध्यति। चिन्मयमित्यत्र 'नित्यं वृद्धशरादिभ्यः' इति सूत्रे नित्यमिति योगविभागाद्रूप्ये मयट् इति।

ननु यदि प्रत्यये परे नित्यमनुनासिकः स्यात् तदा- मदोदग्राः ककुद्मन्तः सरिताः कूलमुद्रुजाः।

लीलाखेलमनुप्रापुः महोक्षास्तस्य विक्रमम् (रघु. 4.22) इति कालिदासप्रयोगः कथमित्याक्षेपः। मतुपः प्रत्ययत्वेन तस्मिन्परे दकारस्य अनुनासिकनकारावश्यम्भावादिति। यवादिगणे ककुद्मच्छब्दे दकारस्य निर्देशान्न तस्यानुनासिकः। यदि तत्र दकारस्य नकार एव इष्टः स्यात्, तर्हि नकारमेव लाघवान्निर्दिशेदिति।

अतोऽत्र भाषायामित्यनेन लौकिकव्यवहारविषये इत्यर्थः सम्पद्यते।

निष्कर्षोऽयं जायते यत् महर्षिपाणिनेः लक्षणे, कात्यायनस्य वार्तिके च भाषायामिति प्रयोगेण लौकिकप्रयोगो भाषा इति जायते। पक्षेऽस्मिन् महाभाष्यकारस्य प्रदीपकारस्योद्योतकारस्य, काशिकाकारस्य श्रीमद्भट्टोजिदीक्षितस्य तथा बालमनोरमाकारस्य च ऐकमत्यं प्राप्यते।

'भाषायां सदवसश्रुवः' (3.2.108) इति सूत्रे नागेशेन भाषायामिति मत्वाह-विकल्पमात्रविधानेऽस्य सूत्रस्य तात्पर्यमिति। 'सख्यशिश्वीति भाषायाम्' (4.1.62) इति सूत्रे 'छन्दस्यपि क्वचित्' इति निर्देशेन भाषाग्रहणेन भाषायां लोके सर्वत्र भवति, वेदे तु क्वचिदिति लभ्यत इत्यर्थः जायते इति। 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (4.3.143) इति सूत्रे भाषायामिति किम् ? 'बैल्वः खादिरो वा यूपः' इत्यत्र लौकिकप्रयोगाभावे मयट्प्रत्ययो न भवति। 'स्थे च भाषायाम्' (6.3.20) इति सूत्रे भाषायामिति किम् ? युवं वस्त्राणि पीवसा वसाथे' (ऋ.1.152.1) इति वैदिकप्रयोगे मा भूत्।

एवंविधं पाणिनिकात्यायनयोः भाषायामिति प्रयोगविज्ञानं नितरां भाषाशास्त्रोपकारकम् इति शम्।

**सन्दर्भाः**


1. महाभाष्यभूमिका-म.म.श्रीगिरिधरशर्मा चतुर्वेदः
2. सूक्तिसमुच्चयः, व्याकरणखण्डः, दिल्लीसंस्कृत-अकादमीतः प्रकाशितः
3. पा. 3.2.108, महाभाष्ये कैयटः
4. महाभाष्ये, उद्योतः पा. 3.2.108
5. पा. 3.2.106
6. पा. 3.2.111
7. पा. 3.2.115
8. पा. 4.2.62, बालमनोरमायाम्
9. पा. 3.2.161 काशिका-भाष्ये च
10. पा. 3.3.100, प्रदीपोद्योते च
12. पा. 4.1.62, बालमनोरमायाम्
13. पा. 4.1.62, काशिकायाम्
14. पा. 4.3.143, काशिकायां भाष्ये च
15. पा.
16. काशिकायाम्, पा. 6.2.178
17. पा. 6.3.20, बालमनोरमायाम्
18. पा. 6.2.88, 8.2.98, बालमनोरमायां काशिकायांञ्च
19. तत्रैव
20. काशिकायाम्, पा. 8.4.45
21. तत्रैव


● **Kaliyachak Vikram Kishor Adarsh Sanskrit Mahavidyalay, Medinipur, West Bengal**



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# माघस्य वैदुष्यम्

बाबूलाल: मीना आचार्य:

(The great poet *Māgha* can be accepted as knowledge embodied. There is no knowledge in this world which is not available in his *kāvya*: *śiśupālabadha*. The paper contains sufficient evidences to prove that the poet has knowledge of our triditional learnings such *vyākaraṇa*, *sāhitya*, *dharma*, *darśana*, *Jyotiṣa*, political science, moral science, war science, spiritual science, musicology, medical science, Astrology and *kāmaśātra* etc.)

संस्कृतसाहित्यस्य समालोचनात्मके इतिहासे प्रतिपादितमस्ति यत् महाकाव्येषु रचनाकौशलेन भावाभिव्यञ्जनया च लघुत्रयी बृहत्रत्यी च प्रसिद्धे स्त:। लघुत्रय्यां महाकवे: कालिदासस्य रघुवंशम्, कुमारसम्भवम् मेघदूतम् च आयान्ति। एवमेव बृहत्त्रय्यां किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितम् च आयान्ति। किरातार्जुनीयम् महाकवे: भारवे: उपलब्धा कृतिरस्ति। इदं महाकाव्यं बृहत्त्रय्यां प्रमुखं स्थानं धारयति। अनेन महाकाव्येन सह एव संस्कृतमहाकाव्यस्य एका नूतना धारा प्रस्फुटिता अर्थात् काव्यक्षेत्रे विचिमार्गस्य सूत्रपातं जातम्। एतत्तु सर्वविदितं तथ्यं वर्तते यद् भारविणा महाकाव्ये विचिमार्गस्य प्रवर्तनं कृतम्, यस्मिन् भावपक्षापेक्षया कलापक्षे कवे: अधिकं ध्यानं याति। पाण्डित्यप्रकर्षस्य अभिव्यक्ति:, प्रमुखस्य विषयस्य परित्यागं कृत्वा दीर्घवर्णनकरणम् विभिन्नानाम् अलङ्काराणाम् एकस्मिन् सर्गे प्रयोग:, विभिन्नानां छन्दसाम् एकस्मिन् सर्गे प्रयोगश्चेत्यादयश्च अस्य मार्गस्य विशेषता: सन्ति विदुषाम् मतानुसारेण।

तत्पश्चात् महाकविना माघेन अस्य विचित्रमार्गस्य विकास: कृत:। माघेन शिशुपालवध-महाकाव्ये महाभारतस्य सभापर्वणि वर्णितस्य शिशुपालवधस्य लोकप्रिया कथा स्वोक्तिवैत्रिपूर्णायाम् अलङ्कृतशैल्यां प्रस्तुता। शब्दार्थयो: मनोहरसामञ्जस्यां, सर्वथा नवीनशब्दावल्या:, अभिनवपदशय्याप्रयोगस्य वा कारणेन शिशुपालवध -महाकाव्यस्य बृहत्त्रय्यां महत्त्वपूर्णं स्थानं विद्यते। वस्तुत: माघस्य काव्यं भाषाप्रौढता-दृष्ट्या वर्णनवैचित्र्येण, अलङ्कारप्रयोगदृष्ट्या, छन्दोयोजनया, दार्शनिकज्ञानेन, भावरसपरिपाकदृष्ट्या च शास्त्रपाण्डित्यस्य सर्वतोमुख्या: प्रतिभायाश्च निदर्शनमस्ति। मूलत: महाकविना सह माघ: दार्शनिक: वैयाकरणश्चापि आसीत्। स: विविध-विषमगुणगणै: समन्वित आसीत्। अत एव तस्य महाकाव्ये विविधविषयाणां ज्ञानं स्थाने स्थाने प्राप्यते। स: तत्कालीनयुगे प्रचलितानां ब्राह्मणानां कृते उपादेयानां शास्त्राणां ज्ञानं धारयति स्म। किं बहुना? संक्षेपेण वदामश्चेत् माघस्य सकलेषु शास्त्रेषु अद्भुत: प्रवेश: आसीत्। तस्य विधशास्त्रज्ञानम् अत्र सोदाहरणं प्रस्तूयते-

### 1. व्याकरणशास्त्रीयज्ञानम्

महाकवि: माघ: शब्दशास्त्रस्य व्याकरणशास्त्रस्य वा मूर्धन्यविद्वान् तथा महावैयाकरणश्च आसीत्। व्याकरणशास्त्रे तस्य असाधारणोऽधिकार: आसीदित्यत्र नास्ति अतिशयोक्ति:। व्याकरणशास्त्र सदृशं नीरसपरिभाषाशास्त्रम् अपि तेन स्वमनोहरोपमाभि: सरसं कृतम्। शिशुपालवधस्य प्रत्येकं श्लोके तस्य व्याकरणविषयस्य पाण्डित्यस्य दर्शनं भवति। अधोलिखिते श्लोके स: व्याकरणशास्त्रस्य महाभाष्यं काशिकावृत्तिन्यासग्रन्थं च प्रति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सङ्केतं कुर्वन् एतदेव उक्तवान् यद् व्याकरणशास्त्रे महाभाष्यस्य पशपशाह्निकस्य तदेव महत्त्वं विद्यते यत् राजनीतौ स्पशस्य (चरस्य)। तथा चोक्तं शिशुपालवधे -

*अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।*
*शब्दविद्येव नो भाति राजनीतिरपस्पशा।।* [1]

सममेव अस्मिन् सः उदाहरणमुखेन स्वव्याकरणविज्ञतां राजनीतिविज्ञतां वा प्रकटितवान्। अधोलिखिते एव श्लोके परिभाषायाः लक्षणं ददत् शिशुपालस्य आज्ञायाः तुलनां व्याकरणस्य परिभाषया सह सम्यक् कृतवान्-

*परितः प्रमिताक्षरापि सर्वं विषयं व्याप्तवती गता प्रतिष्ठाम्।*
*न खलु प्रतिहन्यते कुतश्चित्परिभाषेव गरीयसी यदाज्ञा।।* [2]

अर्थाद् यथा परिभाषा स्वल्पाक्षरयुतापि विस्तृतार्थोपेता भवति, सर्वं तदनुवृत्तिः भवति, सर्वं तस्याः प्रतिष्ठा भवति, तस्याः क्वचित् अवरोधः न भवति, तथैव शिशुपालस्य आज्ञा स्वल्पाक्षरयुक्ता अपि प्रभावकारिणी भवति, सर्वप्रतिष्ठां च लभते, क्वचिदपि तदवरोधः न भवति। एवमेव अधोलिखिते श्लोके माघेन धातूनां कर्तृवाच्ये कर्मवाच्ये च प्रयोगः क्रियान् सुन्दरः कृतः -

*केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।*
*धातवः सृजति सहृशास्तयः स्तौति विपरीतकारकः।।* [3]

अत्र कथितमस्ति यत् सृज् विसर्गे, संहृ संहारे, शासु अनुशिष्टौ येत्यादयः धातवः भगवतः श्रीकृष्णस्य विषये सम्वन्धो वा सर्वदा कर्तृवाच्ये भवन्ति। अर्थात् हरिः सृजति, हरिः संहरति, हरिः शास्ति-एवमेव सर्वदा कर्तृवाचकप्रत्यययुताः भवन्ति, कदापि कर्मवाच्ये न भवन्ति अर्थात् हरिः सृजितः, हरिः संहृतः, हरिः शासितः इत्यादयः प्रयोगाः कर्मवाचकप्रत्ययैः सह प्रयुक्ताः न भवन्ति परन्तु स्तुतौ धातुः सर्वथा एतद्विपरीतः भवति अर्थात् कर्मवाचकप्रत्यययुक्तः भवति, यथा हरिः स्तूयते। परन्तु कर्तृवाचकप्रत्ययेन युक्तः न भवति, यथा हरिः स्तौति, यतो हि हरिः कमपि जनं न स्तौति।

एकस्मिन् अपरस्मिन् श्लोके सः दाधातोः प्रयोगं दानार्थे न कृत्वा त्यागार्थे च कृत्वा धातूनामनेकार्थत्व-सिद्धान्तं प्रति सङ्केतयति -

*दर्शनानुपदमेव कामतः स्वं वनीयकजनेऽधिगच्छति।*
*प्रार्थनार्थरहितं तदाऽभवद् दीयतामिति वचोऽतिसर्जने।।* [4]

एवमेव अस्मिन् श्लोके सः कथयति यत् श्रीकृष्णस्य बाणः पानकरणार्थे तु शत्रूणां रुधिरपानं करोति रक्षाकरणार्थे जगत् रक्षति -

*उःतान्द्विषतस्तस्य निघ्नतो द्वितयः पपुः।*
*पानार्थे रुधिरं धतौ रक्षार्थे भुवनं शराः।।* [5]

अत्र पपुः इति शब्दप्रयोगः। पाधातोः निष्पन्नः। पाधातोः अर्थद्वयम्-पानार्थे (पा पाने) रक्षणार्थे (पा रक्षणे) च। अत्र कृष्णशराः धातुद्वयार्थम् अनुसरन्ति ये शत्रूणां रक्तपानं कुर्वन्ति जगच्च रक्षन्ति।

उपसर्गप्रयोगेण धात्वर्थः परिवर्तितो भवति-इति व्याकरणसिद्धान्तस्य अति सुन्दरं वर्णनं महाकविना कृतम्-

*सन्तमेव चिरमप्रकृत्वादप्रकाशितमविद्युतदङ्गे।*
*विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम्।।* [6]

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

एवमेव ऊनविंशे सर्गे सुहृत्-स्वामि-पितृव्य-मातृ-मातुलशब्दानां निपातनयुक्त-पाणिनीयव्याकरणवत् युद्धपक्षे वर्णितवान् सः- योद्धारः जनाः स्वसम्बन्धिनः निपातितान् कृतवन्तः आसन् इति -

*निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम्।*
*पाणिनीयमिवालोकि धीरैस्तत्समराजिरम्।।* [7]

एवमेव लोट्लकारस्य समुच्चयार्थे भूतकाले प्रयोगः[8], अभिज्ञार्थे भूतकाले लृट्लकारस्य प्रयोगः[9] पाण्डित्यप्रदर्शनाय व्याकरणस्य कठिनरूपाणां प्रयोगाः अपि अत्र दृश्यन्ते। यथा - मध्येसमुद्रम्, पारेजलम्, निषेदिवान्, उपेयुषः, न्यधयिपाताम्, वैरायितारः, विभरांबभूवेत्यादयश्च। अप्रचलितशब्दानां प्रयोगः यथा-प्रोहः (हाथी का पैर)[10], रवणः (ऊँट)[11], कूबरी (रथ)[12] अयः (दैव)[13] दस्रः (अश्विनौ)[14] कपिशः (मद्य)[15] वलजः (धन्यराशि)[16]। एवमेव व्याकरणस्य लिडादिप्रयोगाः एकमालारूपे गुम्फिताः दृश्यन्ते। यथा-सस्नुः, पपुः, अनेनिजुः, जक्षुः इत्यादयः[17]। अनेके नूतनाः शब्दाः अपि माघेन प्रयुक्ताः सन्ति-यथा क्षीणकटिसुन्दर्य्याः कृते शातोदरी[18] असिञ्चत् इति भावस्य कृते उक्षाम्बभूवुः[19] गोवन्धनार्थरज्जोः कृते 'निर्याणम्'[20]।

एवमेव तस्य काव्ये व्याकरणस्य अनेके सिद्धान्ताः अपि यत्र कुत्रचित् प्राप्यन्ते।[21] अनेन सिद्ध्यति यत् महाकवेः व्याकरणशास्त्रे सर्वथा पूर्णाधिकारः आसीत्। इत्थं सः शब्दसाम्राज्यस्य अधिपतिः आसीत्।

## 2 श्रुतिविषयकज्ञानम्

महाकवेः माघस्य श्रुतिविषयकज्ञानम् अतीव प्रशंसनीयमासीत्। सः साङ्गवेदानां ज्ञाता आसीत्। शिशुपालवध स्य द्वितीये एकादशे च सर्गे माघस्य वेदज्ञानसम्बद्धाः श्लोकाः प्राप्यन्ते। सः वैदिकस्वराणां विशिष्टज्ञानमपि धारयति स्म। उद्धवः द्वितीये सर्गे शिशुपालस्य पराक्रमं प्रशंसन् कथयति-

*तदीशितारं चेदीनां भवांस्तमवमंस्तमा।*
*निहन्त्यरीनेकपदे य उदात्तः स्वरानिव।।* [22]

अर्थात् एकपदे यथा उदात्तस्वरः अन्यस्वरान् निघातान् अनुदात्तान् वा करोति तथैव शिशुपालः सः शिशून् एकपदे तत्कालं वा निहतान् नष्टान् वा करोति, अतः भवान् ईदृशं तं शुं न उपेक्षेत। अत्र अनुदात्तं पदमेकवर्जम् इति नियमानुसारं कस्मिन् पदे एकस्य अक्षरस्य उदात्ते सति अन्ये अक्षराः अनुदात्ताः भवन्ति। अर्थात् सः अन्यस्वरान् अनुदात्तान् करोति-अयं नियमः निघातः इति कथ्यते। वैदिकस्वरेषु उदात्तो प्रधानो भवति-महाकविना एतद्विषयकस्य नियमस्य प्रतिपादनं कुशलतया कृतम्। इत्थं शिशुपालस्य उपमास्वरेण सह कविना दत्ता या उपमा सा वेदज्ञानं वैदिकस्वरज्ञानं वा विना न सम्भवा।

किरातार्जुनीयस्य अनुशीलनेन ज्ञायते यद् भारवेः विशेषपाण्डित्यं राजनीतिशास्त्रं प्रति दृग्गोचरीभवति। भारव्यपेक्षया माघस्य पाण्डित्यं विस्तृतमासीत्। सः एकादशे सर्गे प्रभातवर्णनप्रसङ्गे अग्निहोत्रस्य मनोहारि वर्णनं करोति-

*प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरब्धैः सामिधेनीरधीत्य।*
*कृतगुरुदुरितौघधवसमधववर्युवर्यैर्हुतमयमपलीढैः साधु सान्नाय्यमग्निः।।* [23]

अत्र महाकविः कथयति यत् अध्वर्युकार्यकर्तारः ब्राह्मणाः समिद्हवनमन्त्राणां सस्वरं पाठं कुर्वन्तः विधिपूर्वकं हवनं कुर्वन्ति। अनेन उद्धरणेन स्पष्टीभवति यत् माघः अग्निहोत्र-प्रयुक्तानां सामधेनीमन्त्राणां स्वरप्रक्रियाज्ञानं धारयति स्म। चतुर्दशे सर्गे राजसूययज्ञस्य अनुष्ठानं वर्णयता माघेन कर्मकाण्डे स्वपटुता प्रदर्शिता। मन्त्रेषु ऊहप्रयोगः दृश्यताम्-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*नञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे।*
*तं कर्मणि विपर्यणीनमन् मन्मूहकुशलाः प्रयोगिणः।।* [24]

यज्ञेषु ऋत्विजां शास्त्रनिपुणबुद्धिः यजमानस्य च सम्पत्तौ परस्परं स्पर्धया अपचाराभावोऽपि प्राप्यते।[25] अन्यदपि श्रुतिविषयकज्ञानं महाकवेः सूच्यते।[26] प्रथमे सर्गे नारदकृतस्तुतिभिः चतुर्दशसर्गे च भीष्मपितामहकृतस्तुतिभिः एतत् स्पष्टं भवति यत् माघः सनातनधर्मस्य वैदिकधर्मस्य वा अनुयायी परम्परागतपरिपाट्याः च पोषक आसीत्। महाकवेः औपनिषदिकज्ञानमपि अत्र प्राप्यते –

*ध्येयमेकमपथो स्थितं धियः स्तुत्यनुत्तममतीतवाक्पथम्।*
*आमनन्ति यमुपास्यमादराद् दूरवार्तिनमतीव योगिनः।।* [27]
एवमेव अन्यत्रापि द्रष्टव्यम्। [28]

**( 3 ) दर्शनविषयकज्ञानम्**

महाकविः माघः दर्शनशास्त्रस्यापि विशेषः ज्ञाता आसीत्। तस्य दर्शनविषयक-ज्ञानं सर्वाङ्गीणम् आसीत्। सः विभिन्नदर्शनानां सिद्धान्तान् स्वकाव्ये समुचितरूपेण वर्णिवान्। चित्तपरिकर्मसबीजयोगः सत्त्वपुरुषान्यथाख्यातिः इत्यादयः योगदर्शनस्य पारिभाषिकाः शब्दाः वर्तन्ते। योगदर्शने मुदिता, करुणा, उपेक्षा च चित्तस्य शोपकवृत्तयः कथिताः। अविद्या, अस्मिता, रागः, द्वेषः अभिनिवेशश्च-इत्ये पञ्च क्लेशाश्च कथिताः। एतैः पञ्च क्लेशैः मुक्ताः योगिनः सबीजसमाधिं प्राप्य सत्त्वपुरुषान्यथाख्यातेरपि निरोधं कुर्वन्तः इच्छन्ति। योगदर्शनस्य एतान् सिद्धान्तान् सर्वान् एकस्मिन्नेव श्लोके उल्लेखं कृत्वा माघः न केवलं स्वयोगदर्शनस्य ज्ञानं दर्शितवान् अपितु रैवतकपर्वतमपि भोगभूमेः व्यतिरिक्तं मोक्षभूमित्वेन चितवान्–

*मैयादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः।*
*ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो न रोद्‌धुम्।।* [29]

योगदर्शनस्य सिद्धान्तोऽस्ति यद् ईश्वरः पञ्चक्लेशानां द्विप्रकारकर्मणां च फलं न भुंक्ते। श्रीकृष्णः भगवान् साक्षात् ईश्वरसंज्ञकः पुराणः पुरुषश्च वर्तते। सः क्लेशकर्मणां फलानि न भुंक्ते। सः प्राणिनाम् उपकारार्थमेव मानवशरीरं धारयति –

*सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः।*
*क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः।।*[30]

एवमेवान्यत्रापि योगदर्शनस्य सिद्धान्ताः अनेकेपु श्लोकेपु प्राप्यन्ते।[31] यैः श्लोकैः माघस्य पूर्णयोगशास्त्राज्ञानं ध्वन्यते। माघः सांख्यशास्त्रसिद्धान्तानामुल्लेखः कतिपयेषु स्थलेपु कृतवान्। प्रथमे सर्गे नारदः श्रीकृष्णस्य स्तुतिं सांख्यशास्त्रानुकूलां कृतवान्। नारदः श्रीकृष्णं सांख्यदर्शनानुकूलं विकारेभ्यः रहितं प्रकृतेश्च पृथक् पुरातनपुरुषरूपं प्राचीनदार्शनिकैः गृहीतं मन्यते –

*उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन।*
*बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः।।* [32]

एवमेव सांख्यशास्त्रस्य मतमस्ति यद् आत्मा पुण्यपापादिकार्याणि न करोति, बुद्धिः वास्तविकरूपे कार्यकर्त्री मन्यते तथापि कर्मणां फलानि प्राप्तकर्तुः आत्मनः एव तानि कर्माणि मन्यन्ते। तथैव यज्ञादिकार्याणि युधिष्ठरः न कृतवान् अपितु ऋत्विजः गणाः एव समस्तकार्याणि सम्पादितवन्तः, परन्तु यज्ञफलेभ्यः युधिष्ठर एव स्पृहयति। अत एव यज्ञादिकार्याणां कर्ता युधिष्ठर एव अमन्यत–

*तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः।*
*कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजः।।* [33]

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

एवमेव अन्यस्मिन् श्लोके अपि सांख्यज्ञानं प्राप्यते।[34] मीमांसादर्शनस्य परिचयस्तु चतुर्दशे सर्गे प्राप्यते य याज्यया, अनुवाक्यया, ऋचा, हो प्रशास च यागस्य वार्ता कथिता। सममेव पूर्वमीमांसादर्शनस्य द्रव्यदेवतादयः पारिभाषिक-शब्दाः अपि आगताः-

*शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया।*
*याज्यया यजनकर्मिणोऽत्यजन्द्रव्यजातमपदिश्य देवताम्।।* [35]

यः जनः हस्तसञ्चालनेन मन्त्रोच्चारणं न कुर्वन्ति ते वियोन्यां जन्म प्राप्नुवन्ति, अत एव हस्तसञ्चालनेन सह स्वर-वर्ण-अर्थैः मन्त्रोच्चारणं करणीयम्। युधिष्ठिरयज्ञे ऋत्विजः जनाः हस्तसञ्चालनमाध्यमेन एव सस्वरं मनेच्चारणं कृतवन्तः-

*सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ।*
*त सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत।।* [36]

एवमेवान्यत्रापि महाकवेः प्रगाढं मीमांसाज्ञानं प्राप्यते।[37] महाकविः माघः सारभूतस्य वेदान्तदर्शनस्य अपि ज्ञाता आसीत्। सः वेदान्तदर्शनस्य अद्वैतसिद्धान्तस्य सम्यक् प्रतिपादनं करोति। महाकविः माघः ब्रह्मणः निर्गुणं स्वरूपं वर्णयन् मोक्षेच्छुकेभ्यः श्रीकृष्ण एव प्राप्तव्य इति कथयति। सः लिखति यद् यथा कश्चित् पथिकः क्लिष्टं मार्गम् उत्तीर्य निरुपद्रवस्थानं प्राप्य पुनः ततः न आगच्छति, तत्रैव वस्तुमिच्छति, तथैव यः महापुरुषः सांसारिकबाधाः उत्तीर्य मोक्षमार्गमवलम्बयति, अर्थात् श्रीकृष्णं भगवन्तं प्राप्नोति सः पुनः ततः न प्रत्यागच्छति-

*उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।*
*उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया।।* [38]

अस्मिन् श्लोके प्रयुक्तपदद्वयम् 'मोक्षपथम्'' उदीर्णरागप्रतिरोधकम् 'छान्दोग्योपनिषदि षष्ठेऽध्याये कथितस्य' 'आचार्यवान् पुरुषो वेदः' इति प्रकरणस्य दृश्यं स्मृतिपथि आनयति। चतुर्दशे सर्गे श्रीकृष्णः सर्वलोकव्यापी कथितः, एवमेव सृष्टेः मूलकारणं चापि। अनेनः परब्रह्मणः सङ्केतः प्राप्यते। अनेन प्रकारेण यतो वा इमानि भूतानि जायन्ते' इत्यादि तत्रस्थलक्षणनिर्देशोऽपि प्राप्यते -

*आदितामजननाय देहिनामन्ततां च दधातेऽनपायिने।*
*बिभ्रते भुवमधः सदा य च ब्रह्मणोऽप्युपरि तिष्ठते नमः।।* [39]

महाकविः माघः शिशपालवधे न्यायदर्शनविषयकसिद्धान्तान् अपि प्रस्तुतवान्। 'शब्दगुणकमाकाशम्' (अर्थात् शब्दः आकाशस्य गुणोऽस्ति) इति न्यायशास्त्रस्य सिद्धान्तोऽस्ति - इति सिद्धान्तं प्रतिपादयन् महाकविः कथयति - समर्थः राजा स्वयं निष्क्रियो भूत्वा अपि परैः साधितकार्यं तथैव स्वगुणं करोति यथा शब्दः आकाशस्य गुणः इति तर्कसम्मतः सिद्धान्तोऽस्ति -

*अप्यनारभमाणस्य विभोरुत्पादिताः परैः।*
*व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः।।* [40]

महाकविः माघ नास्तिकदर्शनानामपि पण्डितः आसीत्। सः बौद्धजैनादिदर्शनांना सिद्धान्तानां सूक्ष्मं तात्त्विकं च अनुशीलनं कृतवान्। बौद्धदर्शनानुसारेण शरीरे पञ्चस्कन्धातिरिक्तः कोऽपि अपरः आत्मा नास्ति तथैव नृपेभ्यः समस्तकार्येषु सहायादिभ्यः पञ्चेभ्यः अङ्गेभ्यः अतिरिक्तः अन्यः कोऽपि मन्त्रो नास्ति -

*सर्वकार्यशरीरेषु मुक्त्वांगस्कन्धपञ्चकम्।*
*सौगतानामिवात्मान्यो नास्ति मने महीभृतमाम्।।* [41]

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अनेन श्लोकेन महाकवेः बौद्धदर्शनस्य पूर्णपरिचयः प्राप्यते। एवमेव विविधदर्शनानां एक प्रयोगोऽपि प्राप्यते।[42]

**( 4 ) काव्यशास्त्रज्ञानम् –**

महाकविः माघः केवलं महावैयाकरणः दार्शनिकश्च न आसीत्। अपितु काव्यशास्त्रस्य अपि महान् ज्ञाता आसीत्। तेन स्वकाव्ये काव्यशास्त्रीयानां रसानाम् अलङ्काराणां, छन्दसाम्, गुणानाम्, रीतीनाम् इत्यादीनां मान्यतानां सर्वविधवर्णनं कृतम्। सममेव तेन शब्दार्थभावानां निरूपणमपि कृतम्। शिशुपालवधस्य अध्ययनेन ज्ञायते यत् सः स्वमहाकाव्ये स्वसमयमान्यतानुसारं शब्दार्थसहभावमेव काव्यलक्षणं स्वीकरोति स्म, यथा भामहादयः स्वीकुर्वन्ति स्म –

*नालम्बते दैष्टिकतां न निषीदति पौरुषे।*
*शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्ष्यते।।* [43]

सः अकथयद् यत् सत्कविः शब्दार्थौ न उपेक्षेत। न केवलं शब्दः, न केवलमर्थः काव्यम् इति न कथयितुं शक्यते। एवमेव काव्यलक्षणसम्बन्धे महाकवेः माघस्य दृष्टिः समन्वयात्मिका अस्ति। सः काव्ये शब्दार्थयोः स्थितेः अतिदूरे रसस्थितिमपि अपरिहार्यां मन्यते। तस्य मन्तव्यमिदमस्ति यत् रसावस्थां प्राप्नुवतां स्थायिभावानां सञ्चारिभावाः सहायकाः भवन्ति –

*स्थायिनोऽर्थे प्रवर्तन्ते भावाः सञ्चारिणो यथा।*
*रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः।।* [44]

अनेन कथनेन ज्ञायते यत् तस्य शब्दार्थौ सरसौ स्याताम्। एवमेव काव्ये सः गुणानां स्थितिमपि अपरिहार्यां मन्यते। तस्य कथनमस्ति यत् रसभावविदः कवयः केवलं ओजांसि (ओजः) प्रसादं च न अनुसरन्ति अपितु द्वयोरेव गुणयोः यथावसरं अनुसरणं कुर्वन्ति –

*तेजः क्षमा वा नैकन्तं कालज्ञस्य महीपतेः।*
*नैकमोजः प्रसादो वा रसभावविदः कवेः।।* [45]

प्रकारान्तरेण तत्काव्यानुशीलनेन ज्ञायते यत् काव्ये दोषस्थानम् अक्षम्यमस्ति। माघः कथयति यत् कुशलकवयः कोमलपदावलीमपि माधुर्यादिगुणमाध्यमेन श्लेषादिगुणमाध्यमेन वा वैचित्र्ययुक्तां कुर्वन्ति –

*प्रदीयसामपि घनामनल्पगुणकल्पिताम्।*
*प्रसारयन्ति कुशलाश्चित्तं वाचं पटीमिव।।* [46]

यद्यपि माघः स्वकाव्येऽलङ्काराणां समुचितं प्रयोगं कृतवान्, तथापि काव्यात्मानं रसमेव स्वीकरोति सः। एवमेव तस्य मतम् अग्निपुराणकारेण प्रभावितं प्रतीयते। अग्निपुराणकारवत् सः अपि काव्ये रसगुणयोः स्थितिमनिवार्यां स्वीकरोति। इत्थं माघः महाकविः सरसां गुणयुक्तां निर्दुष्टां सालङ्कारां रचनामेव काव्यलक्षणत्वेन स्वीकरोति। अतः निष्कर्षतः तत्काव्यलक्षणमस्ति –

अदोषौ सगुणौ सलङ्कारौ सरसौ शब्दार्थौ काव्यम्। इति

माघः स्वमहाकाव्ये रस-छन्दोऽलङ्कार-गुणादीनां समुचितं प्रयोगं कृतवान्। सममेव सः रसध्वनेः भावध्वनेश्च प्रचुरं प्रयोगं कुर्वन् काव्यस्य ध्वनिः (उत्तमम्), मध्यमः (गुणीभूतव्यंग्यकाव्यम्), अधमः (चित्रकाव्यम्) येति त्रीन् भेदान् स्वीकरोति। रसेषु शिशुपालवधमहाकाव्यस्य प्रधानः रसः वीररसः वर्तते, शृङ्गाररसः तदङ्गमस्ति। वस्तुतः अस्मिन् वीरशृङ्गारयोरद्भुतं मिश्रणं वर्तते। वीररसेन सह शृङ्गाररसस्य एव योगः तिष्ठति। प्रथमे सर्गे एव श्रीकृष्णस्य उत्साहस्य सङ्केतो प्राप्यते, तदालम्बनस्य शिशुपालस्य वर्णनमपि कृतं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कविना। पञ्चदशे सर्गे तु शिशुपालस्य कठोरवचनदोषपूर्णव्यवहाराः उद्दीपनविभावाः विद्यन्ते। सप्तदशे सर्गे तदनुभावानां वर्णनं वर्तते। एवमेव माघः स्वमहाकाव्ये वीररसस्य पूर्णामभिव्यक्तिं कारितवान्। पश्यन्तु भवन्तः वीररसस्य कियत् मनोहारिवर्णनं विद्यते-

*रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः।*
*प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे।।* [47]

वस्तुतः तस्य युद्धवर्णनं तु विशुद्धवीरतायाः परिचायकमस्ति। अष्टादशसर्गेऽपि युद्धवर्णनं वीररसस्य उदाहरणं प्रस्तौति।।[48] संभोगशृङ्गारवर्णने महाकवेः अधिकारः प्रतीयते।[49] विप्रलम्भशृङ्गारविषये महाकविः सफलो न दृश्यते। अन्ये रसाः यथा-रौद्ररसः[50], वीभत्सरसः[51], हास्यरसः[52] करुणरसः, वात्सल्यरसश्चेत्येतेषां, चाद्भुतः समन्वयः।[53] भक्तिभावनया सः नारदमुखात् श्रीकृष्णस्य निराकाररूपं कीर्तयति।[54]

माघः छन्दसां वैविध्यं प्रदर्श्य छन्दश्चयने स्वपटुतां प्रकटितवान्। क्वचित् रसानुकूलं छन्दसां प्रयोगं कृतवान्। प्रथमे सर्गे वंशस्थं, द्वितीये सर्गे अनुष्टुभम्, तृतीयसर्गे उपजातिं, पञ्चमे सर्गे वसन्ततिलकां, षष्ठे सर्गे च द्रुतविलम्बितं प्रयुक्तवान्। महाकविः सर्गस्य अन्ते छन्दःपरिवर्तनं चकार। चतुर्थे सर्गे तु द्वाविंशतिछन्दसां प्रयोगः शास्त्रलक्षणकाराणां मान्यतानुरूपमस्ति। प्रमुखेभ्यो छन्दोभ्यः व्यतिरिक्तानाम् औपच्छन्दसिक-पृथ्वी-तोटक-मत्तमयूरादीनां छन्दसां प्रयोगमपि सः कृतवान्। स्रग्विणी इति छन्दसः अन्त्यानुप्रासयुक्तः सुन्दरः प्रयोगः माघस्य शैल्याः अपि समुचितमुदाहरणं प्रस्तौति। भारविणा प्रयुक्ता प्रवर्तिता चालङ्कारपद्धतिः माघेन स्वीकृता प्रौढ़ीकृता च। एकोनविंशे सर्गे एकाक्षर-द्व्यक्षर-सर्वतोभद्र-मुरजबन्ध-प्रतिलोमयमकानि[55] गोमूत्रिका-बन्ध-समुद्गयमकम्[56], अर्धप्रतिलोमयमकम्[57], भारविणा अप्रयुक्तः चक्रबन्धः[58], चेत्यादीनां श्रमसाध्यानां चित्तकाव्यानां प्रयोगं सः कृतवान्। द्व्यक्षरपद्यानां तु अत्र संख्या अधिका वर्तते। [59] चित्रकाव्ये मुरजबन्धः [60], अन्यालङ्कारेषु उपमा[61], अनुप्रासः[68], स्वभावोक्तिः[69], दृष्टान्तः[70], अर्थान्तरन्यासः[71], गुणेषु ओजोगुणः[72], प्रसादगुणः[73] माधुर्यगुणः[74], एवमेव भावसौन्दर्यस्य प्रसादस्य माधुर्यस्य मधुरः समन्वयः[75], माधुर्यस्य यमकस्य लयात्मकतायाः समन्वयः पश्यन्तु भवन्तः।[76]

माघे प्रकृतिचित्रणम्[77], कमनीयकल्पना[78], माघस्य वर्णनकौशलमपूर्वमस्ति। युद्धवर्णने शृङ्गारस्य उपमा माघेन एव सम्भवा।[79], युद्धवर्णनम्[80], वर्षर्तुवर्णनम्[81] शरदृतोः वर्णनम्[82], प्रभातवर्णनम्[83], प्रभातकालीनस्य निद्रासुखस्य वर्णनम्[84], प्राकृतिकं दृश्यम्[85], सूर्यवर्णनम्[86], यज्ञवर्णनम्[87] द्वारिकायाः समुद्रस्य च वर्णनम्[88] रैवतकपर्वतवर्णनम्[89], आकाशादवतरतः नारदस्य वर्णनम्[90], ग्राम्यजीवनचित्रणम्[91], जवनिका-प्रथायाः वर्णनम्[92], रूपचित्रणम्[93], पदार्थानामायातनिर्यातवर्णनम्[94]। प्राचीनकालीनाया सङ्गोष्ठ्याः वर्णनम् एतत् सर्वं साक्षात्कृतं महाकविना -

*शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसंकरैः।*
*पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमश्रृणोद् द्विजन्मनाम्।।* [95]

चतुर्दशे सर्गे च शिशुपालस्य दूतस्य उभयार्थिका चतुरा उक्तिः।[96] स्थाने स्थाने सुभाषितानि प्राप्यन्ते यथा जीवने दैवपुरुषार्थयोः समन्वयस्य समानं काव्यजगति शब्दार्थयोः समानं महत्त्वं विद्यते। समयः एव मनुष्यस्य उत्थानस्य पतनस्य च कारणं विद्यते।[97] माघस्य काव्यशास्त्रियमहत्तायाः निरूपणम् अस्यां प्रशस्तौ प्राप्यते -

*उपमा कालिदासस्य भारवेरर्थगौरवम्।*
*नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः।।*

माघस्य उपमासु सामान्यासु एकः श्लोकः अतीव प्रसिद्धः येन माघः 'घण्टा माघः' इति विरूदेन अलङ्कृतो जातः -

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*उदयति विततोर्ध्वरश्मिरज्जावहिमरूचौ हिमधाम्नि याति चास्तम्।*
*वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।।* [98]

माघे अन्याः उपमाः रमणीयाः दृश्यन्ते।[99] एवमेव अर्थगौरवम्[100]। वस्तुतः माघस्य भाषायाम् असाध ारणोऽधिकारः आसीत्। अत एव पदे पदे तस्य महाकाव्ये पदलालित्यं प्राप्यते।[101] पदमाधुर्य्या सह स्वरमाधुरी अपि प्राप्यते।[102] माघस्य शैली अलङ्कृता वर्तते। क्वचित् समासबहुला भाषा[103] क्वचित् गुणसमन्विता, क्वचित् माधुर्यप्रसादाभ्यामुपेता भाषा दृश्यते। भाषायां नूतनाः शब्दाः अपि सर्वत्र प्राप्यन्ते। अत एव समीक्षकैः कथितम् यत् नवसर्गगते माघे नवशब्दो न विद्यते तथा 'मेघे माघे गतं वयः' इति। इत्थं शिशुपालवधे वर्णितानामुपर्युक्तानां रस छन्दोलंकार-रीति-गुणादीनां वैचित्र्येण विस्तृतविवेचनेन च एतत् स्पष्टं भवति यत् माघस्य काव्यशास्त्रस्यज्ञानं समुद्रवदगाधमासीत्।

**(5) नाट्यशास्त्रीयज्ञानम्**

महाकविः माघः काव्यशास्त्रवत् नाट्यशास्त्रस्यापि ज्ञाता आसीत्। नाटकपात्रभूमिकादिभिः सः सम्यक् परिचितो अभूत्। शैलूषादीनां नाट्यशास्त्रस्य परिभाषिकशब्दानां प्रयोगः तस्य नाट्यशास्त्रविषयकज्ञानस्य परिचायकः। तेन श्लेषमाध्यमेन नाट्याङ्गानामुपमा रमणीयतया सह दत्ता-

*दधातस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः।*
*भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चाः।।* [104]

अस्मिन् श्लोके नाटके मुखसन्धिः विस्तृतः। अन्ये सन्धयश्च संक्षिप्ताः करणीयाः-इति वर्णनम् सर्वैः सह उपमां दत्वा रोचकशैल्यां कृतम्। अधोलिखिते श्लोके रावणः नटवत् स्वयम् आच्छादयति -

*अथोपपत्तिं छलनापरोऽपरामवाप्य शैलूष इवैष भूमिकाम्।*
*तिरोहितात्मा शिशुपालसंज्ञया प्रतीयते संप्रति सोऽप्यसः परैः।।* [105]

पूर्वरङ्गस्थापनया सह नाट्यशास्त्रीयज्ञानस्य अद्भुता छटा दृश्यतेऽस्मिन् श्लोके। यथा नाटकस्य पूर्णसज्जार्थम् पूर्वं देवस्तुत्यादयः क्रियन्ते, वस्तुतः एते नाटकस्य विषयाः न भवन्ति तथापि वयं यद् ब्रूमः तत्सर्वं निर्णीतः सिद्धान्तः नास्ति, परन्तु युष्माकम् अवसरप्रदानाय नाटकीय- पूर्वरङ्गवत् यत्किञ्चिज्ज्ञानमेवास्ति। इत्थं श्रीकृष्णेन अकथ्यत -

*भवद्गिरामवसरप्रदानाय वचांसि नः।*
*पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः।।* [106]

एवमेव य कुत्रचित् नाटकस्य उपमा यज्ञेन सह दत्ता, या अतीव रमणीया वर्तते। [107]

**(6) राजनीतिज्ञानम् -**

महाकविः माघः भारतीयराजनीतेः विश्रुतः विद्वान् अस्ति। सः विभिन्नानां राजनीतिकसिद्धान्तानां ज्ञानं धारयति स्म। महाकविः भारविरपि राजनीतेः मर्मज्ञः कथ्यते मन्यते च। परन्तु माघस्य समक्षम् अस्मिन् क्षेत्रेऽपि सः मन्दप्रभः प्रतीयते। माघः स्वमहाकाव्ये शिशुपालवधे कौटिल्यस्य अर्थशास्त्रस्य अनेकान् सिद्धान्तान् प्रस्तुतवान्। यथा-षड् गुणाः, तिस्रः शक्त्यः, तिस्रः सिद्धयः, सप्त अङ्गानि द्वादश मण्डलानि च। विभिन्नानां राजनीतिशास्त्रीय-पारिभाषिक-शब्दानां प्रयोगः शिशुपालवधे तद्राजनीतेः ज्ञानं सूचयति। वस्तुतः द्वितीयः सर्गस्तु राजनीतिज्ञानस्य भण्डारः अस्ति। राजनीतिवर्णने उग्रवाद-सौम्यवादयोः द्वयोरेव पक्षयोः निरूपणं विद्यते। राजनीतेः स्वरूपं प्रस्तुवन् महाकविः माघः वर्णयति यद् यथा शरीरे रोगस्य कदापि उपेक्षा न करणीया तथैव राजनीतौ शत्रुः न उपेक्ष्यः -

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।*
*समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च।।* [108]

बलरामः तत्कालम् आक्रमणस्य पक्षधरोऽस्ति परन्तु, उद्धवस्तु अवसरे प्राप्ते युद्धस्य समर्थकोऽस्ति। द्वयोः पक्षयोः अनेके दृष्टान्ताः, राजनीतेः षड् गुणाः, तिस्रः शक्तयः, तिस्रः सिद्धयः, उदयाश्च-इत्येतेषां शास्त्रीयशब्दानां सङ्केतः एकस्मिन्नेव पद्ये कृतः तस्य राजनीतिगाम्भीर्यस्य द्योतको विद्यते -

*षड् गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः।*
*ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम्।।* [109]

राजनीतेः गुप्तचरस्य महत्त्ववर्णनम्[110], एवमेव मन्त्रभेदस्य आशङ्कावर्णनम्[111] प्राप्यते। द्वितीये सर्गे तु प्रारम्भतः अन्तपर्यन्तं श्रीकृष्णस्य बलरामस्य उद्धवस्य च उक्तिषु राजनीतिशास्त्रस्य विभिन्नतत्त्वानां रसमयपद्धत्या उत्कृष्टं प्रतिपादनं कृतं महाकविना। [112] एवमेव षोडशे सप्तदशे च सर्गे राजसूययज्ञावसरे युधिष्ठिरभीममुखेन राजनीतेः जटिलसमस्यानां समाधानं कारितं महाकविना। एवमेव विभिन्नेषु श्लोकेषु विभिन्नानां राजनीतिसिद्धान्तानां वर्णनं प्राप्यते।। [113]

## (7) पुराणशास्त्रीयज्ञानम्

महाकवेः माघस्य पौराणिकज्ञानमपूर्वमासीत्। सः रामायणं, महाभारतं, गीतां पुराणानि च सम्यक् अधीतवान्, अत एव सः अष्टादश पुराणानाम् उपपुराणानां पुराणेतिहासग्रन्थानां च मर्मज्ञः आसीत्। तस्य महाकाव्ये पौराणिककथानां पदे पदे दर्शनं भवति। सः पुराणकथानां दृष्टान्तानां च आश्रयं गृहीत्वा स्ववर्णनानां पुष्टिं करोति। शिशुपालवधे वर्णितमस्ति यत् लक्ष्मीः स्वाधिष्ठानभूतायाः भगवतः श्रीकृष्णस्य नाभेः कमलं परित्यज्य तस्य हृदये अवसत्। युधिष्ठिरेण भगवतः श्रीकृष्णस्य गाढालिङ्गनं कृतम्। तदा नाभिकमलं श्रीहीनं जातम्। तस्य आभा च श्रीकृष्णमुखे द्योतिता, अर्थात् भगवान् श्रीकृष्णः अतिहर्षितः जातः येन तन्मुखकान्तिः वर्धिता-

*गतया निरन्तरनिवासमधुरः परिनाभिनूनमवमुच्य वारिजम्।*
*कुरुराजनिर्दयनिपीडनाभयान्मुखमध्यरोहि मुरविद्विषः श्रिया।।* [114]

सः नारदस्य कृते 'चिरन्तनो मुनिः', हिरण्यगर्भाङ्गभूः, बलरामस्य कृते सीरपाणिः, रेवतीजानिः, मुसलपाणिः, राहोः कृते सैहिकेयः, सूर्यस्य कृते 'अनुरुसारथिः, श्रीकृष्णस्य कृते मुरविद्विषः इत्यादीनां शब्दानां प्रयोगं कृत्वा पौराणिकाख्यानानि प्रति सङ्केतं करोति। तत्र वर्णितं समुद्रमन्थनं यथा -

*अमृतं नाम यत्सन्तो मनजिह्वेषु जुह्वति।*
*शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना।।* [115]

एवमेव अन्यात्रापि समुद्रमन्थनस्य वर्णनं प्राप्यते।[116] पुराणप्रसिद्धस्य कामदेवस्य वर्णनमपि मनोरमम्-

*बाणाहवव्याहतशम्भुशक्तेरासत्तिमासाद्य जनार्दनस्य।*
*शरीरिणा जैशरेण य निःशंकमूषे मकरध्वजेन।।* [117]

पक्षयुक्तमैनाकपर्वतस्य वर्णनमपि महाकवेः पौराणिकज्ञानं व्यनक्ति।[118] एवमेव अन्येषु श्लोकेषु अपि तस्य पौराणिकज्ञानं सूच्यते। [119]

## (8) सङ्गीतशास्त्रीयज्ञानम् -

महाकवेः माघस्य सङ्गीतशास्त्रीयज्ञानस्य (नृत्यगीतवाद्यानां) उपरि अधिकारः आसीत्। एतदेव कारणमस्ति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यत् महाकविः माघः सङ्गीतशास्त्रस्य पण्डितः आसीत्। अस्य शिशुपालवधे महाकाव्ये सङ्गीशास्त्रस्य गायन-वाद्य-ताल-लय-स्वर-श्रुतिमण्डल-मूर्च्छनादीनां पारिभाषिकशब्दानां सहज प्रयोगः प्राप्यते, यः संगीतशास्त्रस्य सूक्ष्मज्ञानस्य परिचायकोऽस्ति। अस्य सङ्गीतशास्त्रीयज्ञानाय एकः श्लोकः एव समर्थः वर्तते, य आकाशात् पृथिव्याम् अवतरन् महर्षिः नारदः स्ववीणां वारम्बारं पश्यति स्म, यस्याः महतीनामकवीणायाः मूर्च्छनाः प्रकटीभवन्ति स्म-

*रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।*
*स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः।।*[120]

प्रातःकाले पञ्चम-षड्ज-ऋषभस्वरगायनस्य निषेधो वर्तते। अत एव बन्दिजनाः प्रातः तान् स्वरान् परित्यज्य प्रभातं वर्णयन्तः भगवतः श्रीकृष्णस्य जागरणाय गानं कुर्वन्तः आसन् -

*श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः सततमृषभहीनं भिन्नकीकृत्य षड्जम्।*
*पाणिजगदुरकाकुश्रावकस्निग्धकण्ठाः परिणतिमिति रोमांगधा माधवाया।।* [121]

एतद्व्यतिरिक्तं कस्मिन् समये कस्य स्वरस्य उच्चारणं निषिद्धं विद्यते। कस्मिन् समये कस्य स्वरस्य ज्ञानं कुर्यादित्येतस्यापि निर्देशः अस्मिन् महाकाव्ये प्राप्यते।[122] इत्थं महाकवेः सङ्गीतविषयकं ज्ञानमुत्कृष्टमासीदिति वक्तुं शक्यते।

**(9) आयुर्वेदविषयकं ज्ञानम्**

महाकवेः माघस्य वैद्यकशास्त्रविषयकम् आयुर्वेदशास्त्रविषयकं वा ज्ञानं विस्तृतमासीत्। सः आयुर्वेदशास्त्रस्य विविधानि अङ्गानि सम्यगधीतवान्। क्वचित् सः आत्मानं वैद्यकरूपेण प्रस्तौति -

*चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।*
*स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति।।* [123]

अर्थात् कः ईदृशः जनः स्यात् ? यः स्वेदेन शान्तिं प्राप्नुवन्तं आमज्वरं जलेन सेक्ष्यति। तात्पर्यमिदमस्ति यद् ज्वरः स्वेदेन शान्तिमाप्नोति। यदि जलेन तस्य जनस्य स्नानं कारयेत् तर्हि सः पुनः वर्धते। एवमेव यथा शरीरस्य अङ्गेभ्यः स्थिरशक्तिप्रदानार्थं रसायनौषधेः उपयोगः अपेक्षितः, तथैव शक्त्यपेक्षिणे राज्ञे सन्धि विग्रहादिषड्गुणानामुपयोगः -

*षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षी रसायनम्।*
*भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति।।* [124]

राजयक्ष्मारोगः यथा अनेकरोगाणां समूहो भवति तथैव शिशुपालोऽपि अनेकराज्ञां समूहोऽस्ति -

*मा वेदि यदसावेको जेतव्यश्चेदिराडिति।*
*राजयक्ष्मेव रोगाणां समूहः स महीभृताम्।।* [125]

एवमेव शक्त्यनुसारेण व्यायामः यथा लाभदायकः तथैव शक्तिहीनाय जनाय व्यायामः क्षयरोगस्य कारणं भवति।[126] शिशुपालः प्रकुपितरोगवत् यान् यान् विकारान् प्रकटितवान्, श्रीकृष्णः योग्यवैद्यकवत् तेषु प्रत्येकम् उचितोपायैः शान्तवान्।[127]

एवमेव महाकविना एकस्मिन् श्लोके मृग्याः रोगिणः इत्युक्तम्।[128] इत्थं सः आयुर्वेदशास्त्रीयसिद्धान्तान् वर्णयित्वा स्वस्य आयुर्वेदज्ञत्वस्य परिचयं दत्तवान्।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**( 10 ) ज्योतिषशास्त्रीयज्ञानम्**

महाकवेः माघस्य आयुर्वेदज्ञानवत् ज्योतिषज्ञानविषये पूर्णोऽधिकारः आसीत्। शिशुपालवधे विभिन्नस्थलेषु तस्य ज्योतिषशास्त्रीयज्ञानस्य पूर्णरूपेण पुष्टिर्भवति। ज्योतिषशास्त्रे पुष्यनक्षस्य महन्महत्त्वमस्ति। महाकविः माघः कथयति यत् पुष्यनक्षत्रं सर्वकार्यसिद्धिकरं विद्यते। पुष्यनक्षत्रे सर्वासां दिशां कार्यं कर्तुं जनाः शक्नुवन्ति। यथा पुष्यनक्षत्रं प्राप्य चन्द्रः शोभते तथैव भगवान् श्रीकृष्णः पुष्यरथमारुह्य रराज -

*रराज सम्पादकमिष्टसिद्धेः सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्।*
*महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढ़ः।।*[129]

ज्योतिषशास्त्रे चन्द्रः यदा भिन्नयोः द्वयोः ग्रहयोः मध्ये स्थितो भवति तदा दुर्धरा नामकः योगो भवति। अस्य तथ्यस्य वर्णनं महाकविना कियत् मनोहारि कृतम् -

*पवनात्मजेन्द्रसुतमध्यवर्तिना नितरामरोचि रुचिरेण चक्रिणा।*
*दधतेव योगमुभयग्रहान्तरस्थितकारितं दुरुधराख्यमिन्दुना।।* [130]

प्रथमे सर्गे एव ज्योतिषशास्त्रसम्मतस्य उदयस्य फलं वर्णितम् -

*व्योम्नीव ......... केतुश्चकारास्पदम्।* [131]

*एवमेवान्यात्रापि ज्योतिषशास्त्रीयसिद्धान्तानां ज्ञानं प्राप्यते।* [132]

**( 11 ) कामशास्त्रीयज्ञानम्**

महाकविः माघः कामशास्त्रे परमप्रवीणः। शिशुपालवधस्य अध्ययनेन ज्ञायते यत् माघः कामशास्त्रीयग्रन्थैः सुपरिचित आसीत्। तेषाम् च विधिवदध्ययनमपि कृतवान्। यादवैः यादवाङ्गनाभिः सह मुक्तत्वेन कामकेलिकरणम्, तस्य च उद्दीपनरूपे प्रकृतिवर्णनम् माघस्य कामशास्त्रीयज्ञानं सूचयतः। कामशास्त्रस्य विवरणं ददन् माघः कथयति यदन्येषु सर्वेषु स्त्रीणां लज्जा आभूषणस्वरूपाऽस्ति, परन्तु रतिकाले लज्जा दूषणस्वरूपा विद्यते। अर्थात् स्त्रीभिः सर्वत्र लज्जा करणीया, परन्तु रतिकाले न -

*अन्यदाभूषणं पुंसः क्षमा लज्जेव योषितः।*
*पराक्रमः परिभवे वैयात्यं सुरतेष्विव।।* [133]

संभोगकालेऽधरपानवर्णनं दृश्यताम् -

*पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदद्क्षौ।*
*लभ्यते स्म परिरक्ततयात्मा यावकेन वियतापि युवत्याः।।* [134]

एवमेव आलिनवर्णनम् -

*अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा।*
*भिन्नशंखवलयं परिणो पर्यरम्भिरभसादचिरोढ़ा।।* [135]

इत्थमन्यात्रापि तत्कामशास्त्रीयज्ञानं द्रष्टव्यम्। [136]

**( 12 ) नीतिशास्त्रीयज्ञानम्**

महाकवेः माघस्य नीतिशास्त्रीयज्ञानमद्भुतमस्ति। सः राजनीत्या सह नीतिशास्त्रे अतीव निपुणः। नीतिसम्बन्धि तत्त्वानां विश्लेषणं कुर्वन् माघः कथयति यत् आपद्गते शत्रौ आक्रमणं नोचितम्–इदं नीतिविरुद्धम्। यथा राहुः पूर्णमेव चन्द्रं तुदति, हिनस्ति वा तथैव समृद्धिपूर्णं शत्रुमेव तुदेत् आक्रमेत् वा -

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये।*
*विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय च।।* [137]

नीतिस्तु तावदीदृशी एव यत् सन्तः जनास्तु एकवारं यत् कथयन्ति तत् अन्तकालं यावत् परिपालयन्ति-

*तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत्।*
*नोपतापि मनः सोष्म वागेका वाग्मिनः सतः।।* [138]
*एवमेव अन्यात्रापि तन्नीतिज्ञानम् अनुसर्तव्यम्।* [139]

**( 13 ) धर्मशास्त्रीयज्ञानम्**

महाकविः माघः पूर्णः धार्मिकः वैष्णवो अस्ति। सः धर्मस्य नीतेश्च ज्ञाता वर्तते। शिशुपालवधस्य प्रत्येकं प्रसंगे धर्मशास्त्रसम्बन्धिनीतिपरकाणां तत्त्वानां विवरणं प्राप्यते। उदाहरणरूपेण हिरण्मयं अण्डं द्विधा विदीर्य ब्रह्मा संसारं रचितवान्-अस्य सिद्धान्तस्य उल्लेखोऽस्मिन् श्लोके द्रष्टव्यः-

द्रुतशातकुम्भनिभमंशुमतो वपुरर्धमग्नवपुषः पयसि।
रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डैकतरखण्डमिव।।[140]

**( 14 ) युद्धविषयकज्ञानम्**

महाकविना शिशुपालवधे युद्धस्थलानां यथावद् वर्णनं कृतं यद् युद्धस्य सर्वं दृश्यं पुरः आगच्छति। प्रतीयते यत् महाकविनां रणभूमिः प्रत्यक्षीकृता। सेनायाः विभागानां, दुर्गनिर्माणानां शस्त्राणां प्रयोगादीनां यथावद्वर्णनं महाकवेः विशेषताः सन्ति। शिशुपालवधे युद्धविद्यायाः पूर्णविनियोगः व्यापकतया अन्तिमसर्गेषु प्राप्यते -

*यातैश्चातुर्विध्यमसदिभेदादव्यासङ्गैः सौष्ठवाल्लाघवाच्च।*
*शिक्षाशक्तिं प्राहरन्दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः।।*[141]

ऊनविंशे सर्गे तु सुहृत्-स्वामिन्-पितृव्य-भ्रातृ-मातुलशब्दानां निपातन-युक्तपाणिनीय-व्याकरणवत् युद्धं वर्णितवान् यद् योद्धारः जनाः स्वसम्बन्धिनः जनान् निपातितान् कृतवन्तः आसन्। [142]

**( 15 ) पशुपक्षिविषयकज्ञानम्**

महाकविः माघः पशुपक्षिविद्यायाः ज्ञानेन सम्यक् परिचितः आसीदित्यत्र नास्ति सन्देहः। सः स्वमहाकाव्ये अश्व-हस्ति-ऊष्ट्रादीनां पशूनां हंसादीनां पक्षिणां च विस्तरं वर्णनं कृतवान्। पशुविद्यासु सः शालिहोस्त्रय अद्भुतज्ञानं धारयति स्म। महाकविना अश्वानां गति-स्वरूप-लक्षणादीनां विस्तरेण वर्णनं कृतम्। तदनुसारं तेऽधिगमनं कुर्वन्ति स्म। कदाचित् तुरेण धावन्ति, कदाचित् मध्यमगत्या, कदाचित् मन्दगत्या चलन्ति स्म अर्थात् शालिहोनुसारेण अश्वाः उत्तम-मध्यम-अधम-कशमाध्यमेन चाल्यन्ते स्म। अस्यापि महाकविना मनोहारि वर्णनं कृतम् -

*तेजोनिरोधसमतावहितेन यन सम्यक्कशायविचारवता नियुक्तः।*
*आरट्टजश्चटुलनिष्ठुरपातुमुच्चैश्चिं चकार पदमर्धपुलायितेन।।* [143]

एतदतिरिक्तं वल्गायाः कुशलः प्रयोगोऽपि अत्र प्राप्यते -

*अव्याकुलं प्रकृतमुत्तरधोयकर्मधाराः प्रसाधायितुमव्यतिकीर्णरूपाः।*
*सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं वल्गाविभागकुशलो गमयाम्बभूव।।* [144]

एवमेव अश्वारोहणविधिः[145] अश्वधावनवर्णनम्[146] इत्यादयः प्रसङ्गाः द्रष्टव्याः सन्ति। पशुषु गजविद्यायाः वर्णने निपुणः माघः। सः गजानाम् लक्षण-चेष्टादीनाम् अतीव स्वाभाविकं वर्णनं करोति। गजाः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

नेत्र-कपोल-मूत्रेन्द्रिय-मलेन्द्रियादिभिः सप्तस्थानैः मदं पातयन्ति-अस्य निरूपणं माघः इत्थम् करोति-

*मदाम्भसा परिगलितेन सप्तधा गजाञ्जनः शमितरजश्चयानघः।*
*उपर्यवस्थितघनपांशुमण्डलानलोकयत्ततपटमण्डपानिव।।*[147]

गजस्य स्वाभाविकक्रियां वर्णयन् महाकविः लिखति -

*उत्क्षिप्यगाः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः।*
*आकुञ्चितप्रोहनिरूपितक्रमं करेणुरारोहयते निषादिनम्।।*[148]

एवमेव अन्यदपि गजज्ञानं परिलक्ष्यते।[149] एवमेव अश्वगजव्यतिरिक्तानाम् ऊष्ट्रादीनां स्वभावकार्याणां वर्णनं स्वभावोक्त्यलङ्कारमाध्यमेन पूर्वपद्धत्यां पञ्चमे सर्गे कृतवान्। क्वचिद् ऊष्ट्रस्य प्रवृत्तेः व्यवहारस्य वा वर्णनं कृतवान्। सः तु तस्य नाम्नः सार्थकतां कथितवान्।[150] एकस्मिन् स्थले दुह्यमानानां गवां चित्रं मनोहारि वर्तते।[151] क्वचित् मृगवर्णनम्[152], क्वचित् शुकवर्णनम्[153], क्वचित् हंसवर्णनम्[154], क्वचित् मधुमक्षिकाणां वर्णनम्[155], महाकवेः विस्तृतं व्यापकं वा तिर्यग्विषयकज्ञानं सूचयन्ति।

**( 16 ) भारतीयसंस्कृतिज्ञानम्**

महाकविः माघः भारतीयसंस्कृतेर्मूलसिद्धान्तेषु विश्वसिति। सः कर्मणः पुनर्जन्मनश्च सिद्धान्तस्य ज्ञाता आसीत्, अत एव कथयति शिशुपालविषये-

*बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा।*
*सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि।।*[156]

अन्यत्र स्थाने स्थाने भारतीयसंस्कृतेर्विभिन्नतत्त्वानि वर्णितानि प्राप्यन्ते।

**( 17 ) विविधशास्त्रीयज्ञानम्**

महाकवेः शिशुपालवधे अन्यविविधशास्त्रीयज्ञानमपि प्राप्यते। अर्थशास्त्रीयज्ञानं यथा-राज्ञः युधिष्ठिरस्य दानशीलतायाः वर्णनं य सः निर्गुणेभ्योऽपि दानं ददाति, यथा आकाशात् पतितं जलम् ऊषरे क्षेत्रे च द्वयोः समानं पतति -

*निर्गुणोऽपि विमुखो स भूपतेर्दानशौण्डमनसः पुरोऽभवत्।*
*वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूषरम्।।*[157]

पाकशास्त्रीयज्ञानमपि द्रष्टम् -

*सामवादाः सकोपस्य तस्य प्रत्युतदीपकाः।*
*प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः।।*[158]

मन्त्रविद्याज्ञानम् यथा -

*बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृत्तिकञ्चुकः।*
*चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः।।*[159]
*एवमेव अन्यदपि मन्त्रविद्याज्ञानं विद्यते।*[160]

इत्थं वस्तुतः ईदृशं शास्त्रं क्षेत्रं वा नास्ति, यस्य ज्ञाता माघः न भवेत्। माघस्तु सर्वगुणसम्पन्नः विद्यापारङ्गतः सर्वज्ञश्च वर्तते, अत एव माघस्य वैदुष्यम् उच्चकोटिकं विद्यते। तस्मिन् केवलं काव्यशास्त्रीया विद्वता एव नास्ति अपितु सः सकलविषयवैदुष्येण अलङ्कृतोऽस्ति। समीक्षकाः कथयन्ति यत् माघस्य कवितायां प्रतिभापेक्षया पाण्डित्यप्राधान्यमेव विद्यते। अत्र अतिशयोक्तिः न भविष्यति यत् प्राचीनः समालोचकः राजशेखरः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

माघस्य पाण्डित्यप्रतिभयां प्रभावितो भूत्वा भावातिरेके तम् ईदृशं प्रशंसेत् –

*कृत्स्नप्रबोधकृद्वाणी भारवेरिव भारवे:।*
*माघेनेव च माघेन कम्प: कस्य न जायते।।* [161]

धनपालोऽपि अस्य कथनस्य समर्थनं करोति –

*माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।*
*स्मरन्तो भारवेरेव कवय: कपयो यथा।।* [162]

एवमेव सत्यमस्ति यत् माघस्य शब्दभण्डार: एव न ज्ञानभण्डारोऽपि विलक्षणो विद्यते। इत्थं माघे सर्वशास्त्राणां परिनिष्ठितं ज्ञानं दृग्गोचरीभवति। द्वितीये सर्गे तु माघेन अनेकशास्त्रीयज्ञानस्य चरमोत्कर्ष: प्रदर्शित: एव।

उपर्युक्तेन विवेचनेन शिशुपालवधस्य च अध्ययनेन ज्ञायते यत् माघ: बहुश्रुत: अनेकशास्त्रज्ञश्च महाकविरासीत्। माघेन वेदे, व्याकरणे, दर्शने, राजनीतौ, आयुर्वेदे, नीतिशास्त्रे सङ्गीतकलायाम्, पुराणेषु, पाकशास्त्रे, ज्योतिषशास्त्रे, कामशास्त्रादौ, विशेषव्युत्पत्ति: प्राप्ता। अत एव एतत् निर्विवादम् सत्यमेवास्ति यत् शिशुपालवधस्य महाकाव्यस्य श्लोकेषु पदे पदे माघस्य व्याकरणशास्त्रस्य, वेदवेदाङ्गानाम्, वेदान्तादिविभिन्नदर्शनानां, पुराणानाम्, काव्यशास्त्रस्य, नाट्यशास्त्रस्य, कामशास्त्रस्य, सङ्गीतशास्त्रस्य, आयुर्वेदस्य, राजनीतिशास्त्रस्य, नीतिशास्त्रस्य, धार्मशास्त्रस्य, तिर्यग्योनिप्राणिविषयकस्य, पाकशास्त्रादिकस्य पाण्डित्यं ज्ञानं वा प्राप्यते यज्ज्ञानं माघस्य बहुविधशास्त्रीयज्ञानस्य अद्भुतकाव्यप्रतिभायाश्च द्योतकमस्ति। एतेन सिद्ध्यति यत् माघ: केवलं प्रतिभासम्पन्न: महाकविरेव नासीत्, अपितु स: विविधशास्त्रीयज्ञानमपि धारयति स्म।

**संदर्भा: –**


| | | | | | |
|---|---|---|---|---|---|
| 1 | शिशुपालवधम् | 2/112 | 2 | तत्रैव | 16/80 |
| 3 | तत्रैव | 14/66 | 4 | तत्रैव | 14/48 |
| 5 | तत्रैव | 19/103 | 6 | तत्रैव | 10/15 |
| 7 | तत्रैव | 19/75 | 8 | तत्रैव | 1/51 |
| 9 | तत्रैव | 1/68 | 10 | तत्रैव | 12/5 |
| 11 | तत्रैव | 12/9 | 12 | तत्रैव | 12/21 |
| 13 | तत्रैव | 13/23 | 14 | तत्रैव | 13/23 |
| 15 | तत्रैव | 12/38 | 16 | तत्रैव | 14/7 |
| 17 | तत्रैव | 5/28 | 18 | तत्रैव | 5/23 |
| 19 | तत्रैव | 5/32 | 20 | तत्रैव | 12/41 |
| 21 | तत्रैव | 1/47, 2/14, 47, 14/23, 24 | 22 | तत्रैव | 2/95 |
| 23 | तत्रैव | 11/41 | 24 | तत्रैव | 14/23 |
| 25 | तत्रैव | 14/32 | 26 | तत्रैव | 2/107, 4/37 |
| 27 | तत्रैव | 14/60 | 28 | तत्रैव | 1/32 |
| 29 | तत्रैव | 4/55 | 30 | तत्रैव | 14/62 |
| 31 | तत्रैव | 14/60, 64 | 32 | तत्रैव | 1/33 |
| 33 | तत्रैव | 14/19 | 34 | तत्रैव | 2/59 |
| 35 | तत्रैव | 14/20 | 36 | तत्रैव | 14/21 |
| 37 | तत्रैव | 14/22 | 38 | तत्रैव | 1/32 |
| 39 | तत्रैव | 14/65 | 40 | तत्रैव | 2/91 |


CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

41 तत्रैव 2/28
42 तत्रैव 13/28
43 तत्रैव 2/86
44 तत्रैव 2/87
45 तत्रैव 2/83
46 तत्रैव 2/74
47 तत्रैव 1/56
48 तत्रैव 18/15, 17
49 तत्रैव 1/61, 2/44, 3/16, 8/69, 10/42, 12/59, 13/40
50 तत्रैव 18/12
51 तत्रैव 18/77
52 तत्रैव 5/7, 12/22, 13/22
53 तत्रैव 15/87
54 तत्रैव 1/33, 35
55 तत्रैव 19/33, 34
56 तत्रैव 19/58
57 तत्रैव 19/88
58 तत्रैव 19/120
59 तत्रैव 19/66, 84, 86
60 तत्रैव 19/29
61 तत्रैव 2/10, 28, 59, 72, 86, 11/40
62 तत्रैव 6/2
63 तत्रैव 3/78, 4/47, 9/8
64 तत्रैव 4/20
65 तत्रैव 18/15
66 तत्रैव 9/6
67 तत्रैव 1/23
68 तत्रैव 6/20
69 तत्रैव 12/24
70 तत्रैव 16/25
71 तत्रैव 1/67,72, 2/13,46, 11/64
72 तत्रैव 1/75
73 तत्रैव 3/16
74 तत्रैव 4/9, 11/19
75 तत्रैव 4/17
76 तत्रैव 4/42
77 तत्रैव 1/4, 5, 4/47, 6/2, 25, 11/64
78 तत्रैव 4/20
79 तत्रैव 18/2
80 तत्रैव 19/75, 20/76
81 तत्रैव 6/25
82 तत्रैव 6/44
83 तत्रैव 11/6, 64
84 तत्रैव 11/4
85 तत्रैव 3/30
86 तत्रैव 11/41, 43
87 तत्रैव 14/18-52
88 तत्रैव तृतीयसर्गे
89 तत्रैव चतुर्थसर्गे
90 तत्रैव 1/3
91 तत्रैव एकादशे द्वादशे च सर्गे
92 तत्रैव 5/17
93 तत्रैव 1/4
94 तत्रैव 3/76
95 तत्रैव 14/37
96 तत्रैव 16/2
97 तत्रैव 6/44
98 तत्रैव 4/20
99 तत्रैव 1/5, 2/91, 96, 112, 3/8, 4/37, 47, 19/41
100 तत्रैव 1/67, 2/13, 72, 4/17, 47, 6/44, 9/6, 13, 11/47
101 तत्रैव 3/78, 4/9, 15, 6/2, 14, 20, 11/64, 15/33
102 तत्रैव 4/45
103 तत्रैव 6/16
104 तत्रैव 20/44
105 तत्रैव 1/69
106 तत्रैव 2/8
107 तत्रैव 14/50
108 तत्रैव 2/10
109 तत्रैव 2/26
110 तत्रैव 2/112
111 तत्रैव 2/29
112 तत्रैव 2/8-12, 22-66, 70-117
113 तत्रैव 2/27, 28, 81
114 तत्रैव 13/11
115 तत्रैव 2/107
116 तत्रैव 8/64, 20/56
117 तत्रैव 3/61

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

118 तत्रैव 5/31
119 तत्रैव 1/35, 2/107, 5/31 66, 8/64, 9/80, 14/68-86, 20/56
120 तत्रैव 1/10
121 तत्रैव 11/1
122 तत्रैव 2/72,90
123 तत्रैव 2/54
124 तत्रैव 2/93
125 तत्रैव 2/96
126 तत्रैव 2/94
127 तत्रैव 20/76
128 तत्रैव 3/72
129 तत्रैव 3/22
130 तत्रैव 13/22
131 तत्रैव 2/2
132 तत्रैव 2/2, 49, 61, 9/6, 23
133 तत्रैव 2/44
134 तत्रैव 10/9
135 तत्रैव 10/43
136 तत्रैव 10/26, 27, 41, 42, 45, 47
137 तत्रैव 2/61
138 तत्रैव 2/109
139 तत्रैव 2/79
140 तत्रैव 9/9
141 तत्रैव 18/11
142 तत्रैव 19/75
143 तत्रैव 5/10
144 तत्रैव 5/60
145 तत्रैव 12/6
146 तत्रैव 5/53
147 तत्रैव 17/68
148 तत्रैव 12/5
149 तत्रैव 4/29, 5/36,47,49, 12/12
150 तत्रैव 12/9
151 तत्रैव 12/40-41
152 तत्रैव 12/43
153 तत्रैव 12/42
154 तत्रैव 12/44
155 तत्रैव 12/54
156 तत्रैव 1/72
157 तत्रैव 14/46
158 तत्रैव 2/55
159 तत्रैव 2/82
160 तत्रैव 2/29
161 संस्कृतसाहित्य की रूपरेखा पृ. 60
162 तत्रैव पृ. 60

**सन्दर्भ-ग्रन्थ-सूची**

1. शिशुपालवधम्, व्याख्याकारः हरगोविन्द शास्त्री, प्रथम-संस्करणम्, चौखम्बा संस्कृत सीरीज, वाराणसी
2. संस्कृत साहित्य की रूपरेखा, पाण्डेय एवं व्यास, 22 तमं संस्करणम्, 1997, साहित्यनिकेतनम्, कानपुर

● संस्कृत विभाग, राजकीय स्नातकोत्तर महाविद्यालय, प्रतापगढ़, राजस्थान



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# जगन्नाथ पाठक और उनके स्वानुभूत सत्य

मञ्जुलता शर्मा

(The paper records the contribution of Dr. Jagannath Pathak to comtemporary Sanskrit writings. It underlines the poet's exprienced truth which is thoroughly expressed throughout his creations. The authoress tries to establish that the specific poetic qualities of Dr. Pathak give him a special status among sanskrit poets of modern times.)

जगन्नाथ पाठक आधुनिक संस्कृत-साहित्य के ऐसे प्रकाश स्तम्भ हैं जिनसे अर्वाचीन संस्कृत की दिशाएँ प्रकाशवान् हैं। नवप्रयोग करने में सिद्धहस्त पाठक जी ने एक ओर छन्द के पारम्परिक सौन्दर्य पर अपनी दृष्टि केन्द्रीभूत की है वहीं दूसरी ओर अन्य भाषाओं के साथ आत्मीय सम्बन्ध स्थापित किए हैं। उनके काव्य में साधना, चिन्तन और विकास की त्रिवेणी प्रवाहित है। वह समाज की विद्रूपताओं के किनारे खड़े होकर देखते हैं। वहाँ जब द्रष्टा की चेतना साक्षीभाव से जुड़ जाती है तो उनका लौकिक भाव अलौकिक बन जाता है। आपकी संस्कृत गजल, रुबाइयों में सौन्दर्य-बोध, लय और बिम्बों की नवीनता चित्ताकर्षक है। पाठकजी की भङ्गीभणितियाँ, इतनी प्रभावशाली हैं कि सहृदयी पाठक उन्हें पढ़कर स्तब्ध रह जाता है। गालिब -काव्य को 'गालिब-काव्यम्' के रूप में संस्कृत में उतारकर, आपने अत्यन्त चमत्कारपूर्ण भावाभिव्यक्ति की है। इसमें भाषा की सुबोधता और प्राञ्जलता मन को बाँधती है। उर्दू की तहजीब और संस्कृत की साफगोई से ओतप्रोत आपकी रचनाएं सत्यानुसन्धान के महत्त्वपूर्ण आयामों तक पहुँचाने का एक सफल प्रयास कही जा सकती है।

मूल्य बदलने पर कविता कैसे बदल जाती है इसका प्रत्युत्तर जगन्नाथ पाठक की 'कापिशायिनी' के चषकों और 'गालिब-काव्यम्' के अन्तस्तल में ढूंढा जा सकता है। साधारण पाठक सम्भवतः उनकी रचनाओं को क्षणिक आनन्द का प्रत्युत्तर समझे परन्तु साहित्य के सच्चे आस्वादक को उनमें कबीर और मीरा की आध्यात्मिक लगन दिखाई देती है। भले ही वह 'गालिब-काव्यम्' के शेरों-शायरी के भावपूर्ण पल हों अथवा **कापिशायिनी** की छलकती हुई मधुशाला हो, **पिपासा** की अतृप्त प्यास हो, अथवा **'आर्यासहस्रारामम्'** में व्यक्त विषम परिस्थितियाँ हों, डॉ. पाठक अनुभूतियों और संवेदनाओं को गढ़ने वाले कुशल शिल्पी हैं। आधुनिक जीवन की विसंगतियाँ, सामाजिक मूल्यों का विघटन, राजनैतिक कुचक्र, और भौतिकता के दंश उनकी अभिव्यञ्जना से और निखर आये हैं।

इस सदी के अन्तिम दो-तीन दशकों में पं. जगन्नाथ पाठक जी ने काव्य के नये रूप से पाठकों का परिचय कराया है। श्रद्धेय भट्ट मथुरानाथ शास्त्री, आचार्य बच्चूलाल अवस्थी जी की गज़ल परम्परा को सुदृढ़ ऊँचाइयाँ प्रदान करते हुये, उर्दू-काव्य-परम्परा से सिक्त होकर ही 'गालिब-काव्यम्' लिखा है, परन्तु कल्पना की मौलिकता और भारतीय मिथकों एवं बिम्बों के तीर-सन्धान ने उसे और पैना बना दिया है। उर्दू-फारसी-गज़ल शैली पर आधारित आपकी गीतियाँ अपनी रागात्मकता से हृदय में अलौकिक आनन्द का संचार करती हैं। कापिशायिनी में कवि ने वैयक्तिक प्रेम की सम्पूर्ण मधुशाला को एक ही चषक में पी लिया है। यह चषक प्रिया की ऐसी मधुर मुस्कान है जो पूरी मधुशाला पर भारी है -

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*चषका इह जीवने मया परिपीता अपि चूर्णिता अपि*
*मदमेष विभर्मि केवलं क्षणपीतस्य मधुस्मितस्य ते।*[1]

वास्तविकता यही है कि सौन्दर्य का मधु अनेक अनुभूतियाँ कराता हुआ मनुष्य को अद्वैत से जोड़ देता है-

*हृदयं हृदये मनो मनस्यपि संगत्य तदेकतां गतम्*
*अधुना तमुपालभे जनं त्वयि यो मय्याप भेदमिच्छति।*[2]

सम्पूर्ण कापिशायिनी में मधुघट, मधुबाला, मयखाना, और प्रेयसी सब कुछ है। जाम भी छलक जाते हैं। परन्तु यहाँ प्रेम और सौन्दर्य की इस भूमि पर एक दार्शनिकता जुड़ जाती है। इस प्रकार पाठक जी के काव्य में साधना, चिन्तन और विकास की त्रिवेणी प्रवाहित होती है। वह समाज की विद्रूपताओं को किनारे खड़े होकर देखते हैं वहाँ जब द्रष्टा की चेतना साक्षीभाव से जुड़ जाती है तो उनका लौकिक भाव अलौकिक बन जाता है। आपकी गज़ल रुबाइयों में सौन्दर्यबोध, लय और बिम्बों की नवीनता बहुत ही चित्ताकर्षक है।

डॉ. जगन्नाथ पाठक अपनी चुटीली अभिव्यक्तियों, उक्ति-भंगिमाओं और कथ्य के वैचित्र्य से पाठकों पर गहरी छाप छोड़ते हैं। एक भावनाविशेष को प्राञ्जल भाषा में पाठकों तक पहुँचाने में आप सिद्धहस्त हैं। भले ही वह उनकी **आर्यासहस्रारामम्** हो, **कापिशायिनी** के चूर्णित होते चषक हों अथवा **विच्छित्तिवातायनी** के आमन्त्रित करते वातायन हों उनकी रचनाओं में स्वभावोक्ति होते हुये भी वक्रोक्ति है, युगीन विद्रूपताओं पर प्रहार होते हुये भी शालीनता है। उक्तिभङ्गी की विचित्रता किसी-न-किसी बहाने उनके शब्दों में उतर आती है :-

*मम हृद्भिक्षापात्रे स्मितकुसुमानीह कानिचित्सन्ति।*
*बहु मन्ये परमेतान् अश्रुकणान् केनचिन्निहितान्।।*[3]

अर्थात् कवि अपने हृदयरूपी भिक्षापात्र में, मुस्कानों के फूलों के स्थान पर किसी के दो अश्रुकणों को अधिक मूल्यवान् समझते हैं। सहृदय कवि का हृदय दु:खियों की पीड़ा का अनुभव करता है, उनके अश्रुओं से द्रवित होता है और उन अश्रुकणों को मुस्कान के फूलों में बदलने के लिए संकल्पित हो उठता है। वास्तव में यही है भारतीय संस्कृति का मूलमन्त्र जिसमें-'परहित सरिस धरम नहीं भाई, पर पीड़ा सम नहि अधमाई' के संदेश को समाज में प्रत्यक्ष करने का आह्वान किया जाता है। इसके अतिरिक्त राजनैतिक विसंगतियों और सामाजिक व्यवस्था के प्रति जब कवि का आक्रोश मुखरित होता है तो शब्द कविता बन जाते हैं। साहित्यकार अपने कार्य और सम्मान से सन्तुष्ट नहीं है। बिना कार्य के सम्मान बंट रहे हैं, सम्मानित होने योग्य साहित्यकार को अपनी रचनाएँ प्रकाशित कराने के लिए भटकना पड़ रहा है। अत: पाठक जी ने दृक् के 10वें अंक में पृष्ठ 1 पर अत्यन्त क्षुब्ध होकर लिखा है कि मैं क्यों लिखता हूँ इस शीर्षक से -

आप कहते हैं कि *''अपने को आज स्थापित करने के लिए केवल लिखने और प्रकाशित होने मात्र तक कर्तव्य सीमित नहीं रह जाता है। लेखक को कुछ और भी करना पड़ता है। यदि वह अपने लेखन के अतिरिक्त और भी नहीं कर पाता तो उसे स्थापित होने में कठिनाई होती हैं। लेखक को स्थापित होने के लिए किसी न किसी गुट में सम्मिलित होना चाहिए, किसी स्थापित लेखक का अनुगत होना चाहिए, किसी बड़े साहित्यकार की धड़ल्ले से आलोचना करनी चाहिए। इस प्रकार अपनी ओर से कोई आँधी-तूफान खड़ा करने का प्रयास करना चाहिए। यदि उसकी यह प्रक्रिया कुछ वर्षो तक कायम रहे तो वह स्थापित हो जाता है अन्यथा शुद्ध लेखन द्वारा आज अपने को किसी ने स्थापित किया हो - यह प्राय: कम ही देखने को मिलता है।''*

कवि की यही पीड़ा उनके काव्य में व्यक्त हुई है कि आज कवि को अपनी कविता बेचने के लिए बाजार में जाना पड़ रहा है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*श्रुतवानस्मि जनेभ्यो नगरक्षेत्रादुपागतेभ्य इदम्।*
*विक्रेतुं स्वां कवितां विपणिं गतवान् जगन्नाथः॥*[6]

साहित्यिक चिन्तन के साथ-साथ राजनेताओं के आचरण पर भी कवि ने व्यंग्य किया है। क्योंकि, वे राष्ट्रीय चेतना में एक ऐसी साधना को जोड़ना चाहते हैं जिसके आधार पर हम सम्पूर्ण विश्व को निहार सकें। परन्तु देश के वे तथाकथित कर्णधार अपने आचरण द्वारा उसे कहाँ ले जा रहे हैं। राजधानी अपने देश की स्थिति को देखकर कैसी संतप्त है –

*शास्त्राचारविहीनाः सन्ति समाजस्य हन्त नेतारः*
*तुरगार्हरथमधुना कर्षन्त्येते खराः कतिचित्।*
*राज्ञो घट्टं विलपति शन्तिवनं वर्तते विषीददिव*
*शफिस्थलमनुताम्यति दर्शं दर्शं निजं देशम्।*

वस्तुतः उनके लेखन में केवल अपने हृदयगत भावों का ही उद्वेलन नहीं है अपितु उनकी दृष्टि अपने लक्ष्य सत्य पर भी केन्द्रित रही है। आप साम्प्रदायिकता को देश के लिए अभिशाप मानते हैं। सम्पूर्ण देश इसी की अग्नि में जल रहा है। अतः वह चिन्तातुर है, भयातुर है और अस्तित्व के लिए संघर्षरत अपने भारत के भविष्य के लिये किंकर्तव्यविमूढ़ भी।

*म्रियते न कोऽपि हिन्दुर्न च यवनः साम्प्रदायिके कलहे।*
*म्रियते मनुष्य एवेत्यनुभूतिर्जायते न कथम्।*[7]

वास्तव में साम्प्रदायिक कलह में हिन्दु-मुस्लिम नहीं मरते, मरता तो मनुष्य है, मरती तो मानवता है। यहाँ भङ्गीभणिति के प्रति पाठक जी की आस्था दिखाई देती है। यही वक्रोक्ति-जन्य प्रयोग उनके काव्य की आत्मा है। गालिब-काव्य को 'गालिब-काव्यम्' बनाने वाले कवि ने अपनी अनेक गीतियों द्वारा चमत्कारपूर्ण भावाभिव्यक्ति की है। यद्यपि उर्दू-भाषा का एक अलग अदब और सलीका होता है परन्तु पाठकजी के शब्दों का सन्तुलन पाठकों को प्रभावित करता है। भाषा की प्राञ्जलता एवं सुवोधता मन को बाँधती है। यदि उनकी भाषा को एक शब्द में बताने की शर्त हो तो उसे 'मसृण' कहा जा सकता है। पाठक इसके प्रवाह में फिसलता है इसमें संस्कृत की साफगोई और उर्दू की तहज़ीब है। कुछ उदाहरण द्रष्टव्य हैं –

**मूल शेर** – *मैं वो चराग़ हूँ जो आँधियों में रोशन था*
*खुद अपने घर की हवा ने बुझा दिया है मुझे।*

पाठक जी ने लिखा –

*येनाञ्चलेन रक्षित आसं प्रबलासु हन्त वात्यासु।*
*तेनाञ्चलेन संप्रति निर्वापित एष दीपोऽहम्॥*[8]

यहाँ पर भावसाम्य में दोनों ही गीतियाँ समान सन्देश देती हैं परन्तु उक्ति-चमत्कार एवं भङ्गीभाणिति में पाठकजी अधिक खरे प्रतीत होते हैं। क्योंकि चिराग का आँधियों से बुझना अथवा घर की हवा से बुझ जाने में स्वार्थमय गन्ध का आभास होता है। परन्तु आंचल से रक्षित दीपक यदि आंचल की हवा से ही बुझे तो अधिक अपील करता है। रक्षक का भक्षक बन जाना अधिक सन्देशग्राही है। जिसके आश्रय में जीवन का सपना हो वही उसे मृत्यु का कफन उढ़ा दे, इससे अधिक दुर्भाग्य क्या हो सकता है। वस्तुतः इससे प्रतीत होता है कि डॉ. पाठक का अन्तर्मन जहाँ बंधता है वह वही लिखते हैं उन्हें अपने साहित्य का विशाल प्राचीर खड़ा करने का जुनून नहीं है अपितु वह तो काव्य-सागर से एक-एक रत्न निकालने की प्रतीक्षा में है। अतः काव्य में कहीं उनकी आध्यात्मिकता, कहीं भौतिकता और कहीं सामाजिकता नए-नए उपमानों के साथ पदार्पण करती है। अपने एकनिष्ठ समर्पण के लिए वह तत्पर हैं –

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*मेहरबां होके बुला लो मुझे चाहो जिस वक्त।*
*मैं गया वक्त नहीं कि फिर आ भी न सकूँ।।*

**संस्कृत में परिवर्तित रूप**

*आर्द्रीभूयागन्तुं निर्दिश मे समयमात्मनात्ताभीष्टम्।*
*नाहं विगतः समयः पुनरागन्तुं न यार्हेयम्[9]।।*

यहाँ आर्द्रीभूय में भावप्रवणता अधिक दिखाई देती है। 'मेहरबां' होने में दया कृपा का भाव है, स्वीकार करने में दीनता की अनुभूति है, परन्तु आर्द्रीभूय में द्रवित होने का भाव निहित है। यहाँ मन के भीगने में कई तरंगे हैं – बुलाने वाले से अन्तरङ्गता, प्रेम की पराकाष्ठा, वियोग की पीड़ा और प्रिय के आ जाने का विश्वास। पुरानी स्मृतियाँ जब मन में पैठती हैं तब ही तो वह आर्द्रीभूय हो सकता है। यहाँ मिलने की कोई शर्त है ही नहीं, न कोई मेहरबानी, न कृपा। यहाँ तो भीगे मन में डूबा हुआ मन है, हृदय से हृदय के जुड़ जाने का आनन्द है। अतः एक तथ्य निर्विवाद है कि आपकी समस्त कृतियों में समकालीन युगबोध, अभिनव भावों का स्पंदन और स्वाभाविक चमत्कार का उन्मेष है। विषय कोई भी हो उसकी प्रस्तुति का अन्तर ही सम्पूर्ण प्रसंग को बदल देता है। पिपासा के स्वगत कथन में आपने स्वयं ही स्वीकार किया है कि ''यद्यपि संस्कृत और उर्दू में वक्रोक्ति और बांकपन का अन्तर है परन्तु मैंने संस्कृत को भी उर्दू गजल की काव्य-पद्धति के आश्रय से लिखा है। इसके समर्थन में आपकी सादगी में भी बांकपन नजर आ ही जाता है –

*है उनकी सादगी भी तो कुछ इक फबन के साथ।*
*सीधी सी बात भी है तो एक बांकपन के साथ।।[10]*

कहीं तो हृदयरूपी कांच के विखरे हुए टुकड़ों की पीड़ा है तो कहीं बेआबरू होकर द्वार में निकाले जाने का तिरस्कार। परन्तु गालिबकाव्यम् को पढ़ते समय प्रतीत होता है कि सर्वप्रथम कवि ने उसमें स्वयं को स्थापित किया, कुण्डलिनी की जाग्रतावस्था के सदृश स्वयं को आनन्दित करते हुये उसमें तन्मय हो गये। इसी अभेद कार्यसिद्धि से संस्कृत में उन भावों को उसी वागर्थप्रतिपत्ति में प्रस्तुत किया। प्रथमतः गालिब के अन्तस्तल में पहुँचकर पुनः लौटने में पाठकजी को अत्यन्त बुद्धिश्रम करना पड़ा होगा। क्योंकि परकीय काव्य की वागर्थप्रतिपत्ति बहुत ही दुष्कर कार्य है। किसी-किसी गीति में तो कवि की यह प्रज्ञा और भी अधिक प्रखर हो गई है –

*कोई उम्मीद बर नहीं आती*
*कोई सूरत नज़र नहीं आती।*
*मौत का एक दिन मुअइयन है*
*नींद क्यों रातभर नहीं आती।*

*आगे आती थी हाले दिल पे हंसी*
*अब किसी बात पर नहीं आती।*

अन्त में –

*क्यों न चीखूं कि याद करते हैं*
*मेरी आवाज़ गर नहीं आती।*

*चीत्कारं कथमेवं न विदध्यां यत्स्मरत्यसौ नूनम्।*
*यदि नोपैति मदीयः श्रुतिपथमार्तस्वरः कश्चित्।।[11]*

यहाँ पीड़ा की पराकाष्ठा को व्यञ्जित करने में श्रुतिपथ की भूमिका बहुत सकारात्मक है। मूल शेर में भी यद्यपि भाव वही है परन्तु वक्रोक्ति की नवीनता यहाँ ध्वनि उत्पन्न करती है। स्वयं चिल्लाना हो अथवा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दूसरे का रुदन हो दोनों के लिए श्रुति का होना अनिवार्य है। इन्द्रियों का अभीष्ट कार्य में लिप्त न होना इस तथ्य को संकेतित करता है कि प्रेम की असफलता से संयम खो गया है, इन्द्रियां शिथिलप्रायः हैं कान जो मुख के सर्वाधिक करीब हैं वो भी पीड़ा के विषय में स्पन्दनहीन हो रहे हैं। यही जड़ता प्रेम की असफलता और अनन्यता को व्यक्त करती है।

इस प्रकार पाठक जी उत्कृष्ट कोटि के सहज रचनाकार ही नहीं है अपितु शब्दों की आत्मा को काव्य में उतारने वाले सर्जक हैं। वे समय की नब्ज और धड़कन को अत्यन्त प्रभावी पद्धति से व्यक्त करते हैं। उनकी सुदीर्घ साधना, एकनिष्ठ समर्पण और समूचे जीवन की एकाग्रता ही उनके काव्य का प्राणबिन्दु है। कवि ने पुरातन प्रसंगों के साथ हृदयग्राही नवीन प्रस्तुतियाँ दी हैं। सीता का पृथिवी से उत्पन्न होना ही उनके धैर्य को व्यक्त करने के लिए पर्याप्त है। परन्तु सम्पूर्ण जीवन में अनेकों कष्टों को सहन करते हुये मानो सीता को तीन बार पुनर्जन्म लेना पड़ा। प्रथमतः हल जोतते समय जनक द्वारा ग्रहण किये जाने के कारण वे उनके पिता हुये। तदुपरान्त रावण से रक्षा करने में तत्पर हुआ जटायु उनका पिता हुआ और अन्त में तमसा नदी के तट पर रोती सीता को आश्रय देने वाले वाल्मीकि उनके पिता हुये।

*आसीदेका जननी जानक्याः केवलेह पृथिवीयम्।*
*जनको जटायुराद्यः कविश्च तस्यास्त्रयः पितरः।।*[12]

कहने का अभिप्राय यह है कि भारतीय संस्कृति में पिता का दायित्व केवल सन्तान उत्पन्न करना ही नहीं है, अपितु विपत्ति में रक्षा और आश्रय देना भी उसका कर्तव्य है। तब ही वह वास्तविक रूप में पिता कहलाने का अधिकारी है। इस प्रकार कवि क़ा भावबोध सतही न होकर अत्यन्त धीर-गम्भीर है।

पाठक जी का सम्पूर्ण काव्य और उनका चिन्तन-साधना एवं विकास के सौरभ से अनुस्यूत है। सौन्दर्यबोध के साथ-साथ रागात्मकता, बिम्बविधान, और भारतीय जीवन दृष्टि की अभिव्यक्ति उनके काव्य में मिलती है। सामाजिक यथार्थ को भी उन्होंने अपने काव्य का विषय बनाया है। जीवन के विविध रंग मनुष्य के जीवन को कैसे प्रभावित करते हैं – इसको समसामयिकता से जोड़कर कवि ने सार्थक प्रयास की पहल की है।

डॉ. जगन्नाथ पाठक की कल्पना की उड़ान इतनी ऊँची है कि सतही पाठकों के लिए उसका आनन्द लेना दुःसाध्य है। 'मृद्वीका' में लिखी एक आर्या मानो उसके मन की वात है, उनका जीवनदर्शन है –

*मम नाशय पक्षतिद्वयं ननु मां पञ्जरके निवेशय।*
*परमुड्डयनाय लालसां मयि जातां कथमेव रोत्स्यति*[13]*।।*

अर्थात् चाहे कोई मेरे पंख काट दे अथवा मुझे पिंजरे में बंद कर दे, परन्तु मुझमें जो ऊँची उड़ान भरने की अभिलाषा है उसे कौन और कैसे रोक सकता है। यह है कवि का सन्देश। जीवन की प्रतिकूल धारा में बहने का साहस और अपने लक्ष्य तक पहुँचने का हठ भी। कवि के यह स्वानुभूत सत्य उनकी जिजीविषा है, जो उन्हें अपने लेखन के प्रति आश्वस्त ही नहीं करते अपितु उन युवाओं को भी प्रेरित करते हैं जो शोषित होने पर मार्ग तय करने का इरादा बदल रहे होते हैं। यही है साहित्य की चिरन्तनता जो प्रत्येक युग में उसी सत्य के रूप में प्रतिभासित होती है।

डॉ. जगन्नाथ पाठक के काव्य में केवल राजनैतिक और सामाजिक विसंगतियां, प्रेम की स्वप्निल अनुभूतियां और यथार्थ के वक्रसन्धान ही नहीं है, अपितु सूफीवादी-परम्परा से पुष्ट प्रेममार्गी उपासना का स्रोत भी स्पष्ट रूप से प्रवहमान दिखाई देता है। कवि का समर्पण-भाव, गन्तव्य भाव, वह ब्रह्म ही है –

*तन्नास्ति वस्तु यद्धि भवेत् तुभ्यमदेयम्।*
*सर्वं त्वदीयमेव, न रे तुभ्यमदेयम्।*[14]

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अत: पाठक जी इसी भावभूमि में आत्मा-परमात्मा का दर्शन करते हैं। इसी की चिल्मन से नश्वर प्रेम को भी शाश्वत बना देते हैं। उनकी यह अनवरत, अतृप्त पिपासा ही उन्हें अनुपम अनुभूति के पीयूष -संचार से सिक्त कर देती है।

**निष्कर्ष** - अन्तत: यही कहा जा सकता है कि अपनी रचनाधार्मिता से ही साहित्यकार सत्यानुसन्धान को एक व्यापक और महनीय आयाम देता है। मूलत: मानवमात्र का कल्याण ही उसका लक्ष्य होता है। अत: प्रखर विचारक, सहृदयी कवि, और लीक छोड़कर अपने मार्ग का निर्णय करने वाले पाठकजी निस्सन्देह बेजोड़ है। यह लेख एक प्रयास है **'कापिशायिनी'** के चषकों के आस्वादन के लिए, **'पिपासा'** की तृप्ति के लिए - **आर्यासहस्रारामम्'** की आर्याओं से उपकृत होने के लिए, **'विच्छित्तिवातायनी'** में झांकने के लिए और 'गालिब-काव्यम्' की मधुशाला में डूब जाने के लिए। ऐसी ख्वाहिशें ही तो जन्म देती हैं उत्कृष्ट साहित्य को।

*हज़ारों ख्वाहिशें ऐसी कि हर ख्वाहिश पे दम निकले।*
*बहुत निकले मेरे अरमान लेकिन फिर भी कम निकले।।*

पाठकजी ने इस ख्वाहिश को 'तृष्णा' कहा है, क्योंकि तृष्णा में अतृप्ति है, मृगमरीचिका है, छलना है, निरन्तरता है और जीवन का पूर्ण आनन्द भी।

*प्रत्येकं तृष्यसवों निर्गच्छेयुस्तृषां सहस्रमिदम्।*
*न्यूनास्तथापि, यद्यपि बहव: पूर्णा मदभिलाषा:।*[15]

**संदर्भ**


1. कापिशायिनी, 1/2, डॉ. जगन्नाथ पाठक, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, 1980
2. वही - 3/17
3. आर्यासहस्रारामम् 217, डॉ. जगन्नाथ पाठक, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, 1995
4. वही, 18/136
5. विच्छित्तिवातायनी 19/162 डॉ. जगन्नाथ पाठक, रोहतास (विहार), 1991
6. वही, 2/13
7. इनत 43/383 - रोहतास, बिहार
8. गालिबकाव्यम्, दास पब्लिशर्स, 20 डी बेली रोड, इलाहाबाद, 2003
9. वही, 231/90
10. पिपासा भूमिका, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, 1987
11. गालिबकाव्यम् 421/162
12. विच्छित्तिवातायनी 83/737, रोहतास, बिहार, 1991
13. मृद्वीका- 155, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद
14. पिपासा, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद
15. गालिवकाव्यम्, अरविन्द प्रिंटर्स, 20-डी, बेलीरोड, इलाहाबाद 2003


• **49, Kailash Vihar, Agra (U.P.)**



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# प्राचीनकाव्यशास्त्रालोके शब्दार्थसम्बन्धः

सुरेन्द्रपालसिंह

(The present paper deals with the word-meaning relationship as accepted by various schools of Indian thinkers like poeticians, grammarians, Naiyāyikas, Mīmāṃsakas, Bauddhas and Jainas etc. Whether the word is *nitya* or *anitya*, whether their relation is *nitya* or *anitya* is a question before a common man. To this our *śāstrakāras* reply in their own way. The paper also tells us about *sābdobodha*- procedure and explains whether the word has independent existence or it is only a part of a sentence.)

चित्तवृत्तिगतभावस्य अर्थस्य वा शब्देन कश्चिदनिवार्यसम्बन्धः। कीदृशोऽयं सम्बन्धः ? केन प्रकारेण अर्थः शब्देन द्योत्यते इति विषयः काव्याचार्याणां सार्वकालिको विचारविषयः। शब्दार्थयोः सम्बन्धः नित्योऽनित्यो वा इत्यत्र तैः कदाचिदधिको विवादः न कृतः किन्तु तेषां व्यवहारेण शब्दार्थनित्यत्वमेव सङ्केतितम्।

भामहाचार्येण शब्दस्य नित्यत्वन्तु स्वीकृतं किन्तु सत्तात्मकार्थेन शब्दस्य सम्बन्धः नित्योऽनित्यो वाऽस्मिन् विषये अविचार्य अस्य निश्चितौ विद्वांसः प्रमाणम् इति तेनोक्तम्।[1] कालिदासादिभिः वागर्थसम्बन्धः सम्पृक्तः अभिन्न एव वा स्वीकृतः।[2] भामहस्य तात्पर्यमिदमस्ति यद् वर्णेभ्यः शब्दः उत्पद्यते। वर्णास्ते नादस्वरूपा न भवन्ति अपितु नादेन अभिव्यङ्ग्याः। महाभाष्योक्तैः 'शब्दं कुरु', 'मा शब्दं कार्षीः', 'शब्दकार्ययं माणवकः' इत्यादिलोकप्रयुक्तशब्दैः स्पष्टं भवति यद् या प्रतीतपदार्थकध्वनिः लोके उच्चरितो भवति स एव शब्दः। वृहद्देवताग्रन्थे उक्तं वर्तते यद् यद् 'वर्णसंघातजं पदम्'[3], अर्थशास्त्रे उक्तं यत् 'वर्णसंघातः पदम्'[4] तथा च शुक्लयजुर्वेदे उक्तमस्ति यत् 'अक्षरसमुदायः पदम्'[5]। वस्तुतः लोकव्यवहारे एकार्थबोधकत्वेऽपि शब्दः पदं च पृथक् पृथगेव। 'सुप्तिङन्तं पदम्', 'विभक्त्यन्तं च पदम्' इति पदलक्षणं तथा च 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिक - (शब्द) लक्षणम्। लोकव्यवहारे प्रयोगः शब्दस्य एव न भवति अपितु पदस्य, प्रायः तौ पर्यायरूपेण प्रयुज्येते। यथा महाभाष्ये 'केष्वर्थेषु लौकिकाः कान् शब्दान् प्रयुज्यन्ते'[6] इत्युक्तं वर्तते यद्यपि 'कानि पदानि' इति नियमतः प्रयोक्तव्यानि।

महाभाष्यकारेणोक्तं यत् 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः'। भामहानुसारेण सार्थकवर्णसमुदायः एव शब्दः। किन्तु स्फोटवादिनामस्ति विमतिः। यथा यतो हि वर्णाः अर्थहीनाः सन्ति, अतः तेषां समुदायोऽपि अर्थहीनः स्याद्। एवमेव क्षणिकवर्णानां समुदायः कथं शक्यः। अस्य निराकरणार्थमेव वैयाकरणैः वर्णानाम् एकत्वं विभुत्वं नित्यत्वञ्च स्वीकृतम् -'अवर्णादीनामेकत्वं नित्यत्वं विभुत्वं च .. ... शब्दबुद्धिकर्मणां क्षणिकत्वमिति न युक्तम्' (वैयाकरणसिद्धान्तमञ्जूषा शक्त्याश्रयनिरूपणम्)। अतः तैः स्फोटवादः कल्पितः। यस्य तात्पर्यमस्ति नित्यः अखण्डशब्दः इति।

स्फोटवादविरुद्धे भामहेनोक्तं यद् वर्णाः सङ्केतितार्थबोधका एव।[7] दण्डिना 'इष्टार्थव्यवच्छिन्ना पदावली काव्यम्' इति उक्त्वा पदार्थयोः सम्बन्धः स्वीकृतः। एवमेव वामन[8]-रुद्रट[9]-मम्मट[10]-आनन्दवर्धन[11]-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

हेमचन्द्र[12]-वाग्भट[13]-विद्यानाथ[14]-विद्याधर[15]-आदिभि: शब्दार्थयो: नित्यसहचार: स्वीकृत:। विश्वनाथाचार्येण शब्दार्थ विहाय 'वाक्यं रसात्मकं काव्यम्' इत्युक्तम् जगन्नाथाचार्येण च शब्दं काव्यमिति स्वीकृत्य तस्य रमीणीयार्थवत्तायां बलं दीयते। एवं काव्यशास्त्राचार्यै: सम्पृक्तशब्दार्थौ एव काव्यमिति स्वीकृतौ।

महाभाष्यकारेण शब्दानां चतुर्धा प्रवृत्ति: मता।[16] 'चतुष्टयी शब्दानां प्रवृत्ति: जातिशब्दा: गुणशब्दा: क्रियाशब्दा: यदृच्छाशब्दाश्चतुर्धा'। प्रयोगरीत्यनुगुणं शब्दा: द्विधा-सन्ति दृष्टव्ययशब्दा: अव्ययशब्दाश्च। दृष्टव्यया: सन्ति सुप्तिङन्ता:[17] अव्ययाश्च ते ये लिङ्गवचनविभक्तिषु समानरूपा:।[18] प्रवृत्तिनिमित्तदृष्ट्या यास्काचार्येण चतुर्धा शब्दभेदा: कृता:-नाम-आख्यात-उपसर्ग-निपाता इति। भामहाचार्येण द्रव्यगुणजातिक्रियाभेदात् शब्दा: चर्तुविधा: उक्ता:।[19]

इत्थं वक्तुं शक्यते यद् अर्थमवधार्य शब्द: परिभाषित:। यतो हि शब्दार्थसम्पृक्तिं विना काव्यत्वमशक्यम्। दण्डिन: कथनमेतत्सत्यमेवास्ति यत् शब्दाख्यज्योतिषा एव संसार: दीप्यते। यथा च भर्तृहरिणोक्तं यत्-

*न सोऽस्ति प्रत्ययो लोके य: शब्दानुगमादृते।*
*अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।*

किन्तु शब्द: स्वयं साध्य: न अपितु द्योतक:। स्यान्नाम 'स्फोटवाद:', नैयायिकानाम् 'अनेकवर्णावगाहिनी पदप्रतीति:' उत वा बौद्धानां 'तद्भिन्नभिन्नत्वम्'। शब्दार्थस्वरूपचर्चाक्षेत्रे अर्थानुगुणमेव 'स्याद्वाचको लाक्षणिक: शब्दोऽत्र व्यञ्जकस्त्रिधा' इत्युक्त्वा शब्दा: त्रिधा मता:। वस्तुत: काव्यशास्त्रिणां दृष्टि: अर्थप्रधानैव- 'प्रधानमर्थ: शब्दो हि तद्गुणायत्त इष्यते।'[20] अर्थस्य सरलतमलक्षणम् एतदेव वर्तते यत् शब्देन यत्प्रतीयते तदेव तस्यार्थ:। यथोक्तं भर्तृहरिणा[21] -

*यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थ: प्रतीयते।*
*तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ।।*

भारतीयकाव्यशास्त्रे शब्दार्थसम्बन्धस्य एषा क्रिया शाब्दबोधप्रक्रिया इत्युक्ता। विवेचनमस्य न्याय-मीमांसा-व्याकरणशास्त्रेषु विशेषरूपेण कृतम्। पदशास्त्रत्वेन व्याकरणस्य, प्रमाणशास्त्रत्वेन न्यायस्य वाक्यशास्त्रत्वेन च मीमांसाया: शाब्दबोधविवेचने महत्त्वपूर्णयोगदानमस्ति। शब्दार्थसम्बन्धनिर्धारणे यद्यपि काव्यशास्त्राचार्यै: त्रयाणामेव साहाय्यं प्राप्तं किन्तु ते प्रामुख्येन वैयाकरणमतपोषका एव।

भाषाव्यवहारे शब्द: स्वतन्त्ररूपेण न अपितु वाक्यस्य अङ्गरूपेण प्रयुज्यते। अत: व्यवहारे वास्तविकसत्ता वाक्यस्यास्ति। भर्तृहरिणोक्तं यद् यथा वर्णेषु अवयवा न सन्ति तथैव पदेषु वर्णा: वाक्येषु वा पदानि न विद्यन्ते-

*पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न च।*
*वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।*

किन्तु एतदपि सत्यं वर्तते यद् *'वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्त: पदोच्चय:'*। वैयाकरणै: स्फोटवाद: स्वीकृत:। यद्यपि वर्णपदस्फोटादिभेदेन बहुभेदयुत: स्फोट: किन्तु लोके प्रामुख्यन्तु वाक्यस्फोटस्यैव, *'तत्र वाक्यस्फोटो मुख्यो लोके तस्यैवार्थबोधकत्वात्तेनैवार्थसमाप्तेश्च।'* नागेशभट्टेन स्फुटितार्थशब्दयो: पद-पदार्थयो: वा सम्बन्धान्तरमेव शक्ति: इत्युक्तं- *'पदपदार्थयो: सम्बन्धान्तरमेव शक्ति: वाच्यवाचकभावपर्याया'*। शक्तिग्राहकश्च संकेत:। महाभाष्ये उक्तं सङ्केतस्तु पदपदार्थयो: इतरेतराध्यासरूप: स्मृत्यात्मक:, योऽयं शब्द: सोऽर्थो योर्थ: स शब्द:।' अभिधादिशक्तित्रये अभिधाशक्ति: अग्रिमा यतो हि *'सङ्केतितार्थस्य बोधनादग्रिमाभिधा'*। स्फोटमस्वीकृत्य भामहाचार्येण एतत्संकेतार्थमेव *'प्रागित्थं समय: कृत:'* इति उक्तम्। कौण्डभट्टेनापि कदाचिद् स्वविषयेषु इन्द्रियाणाम् अनादियोग्यत्वाद् शब्दार्थयो: अनादिसम्बन्ध: उक्त:[22]-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

*इन्द्रियाणां स्वविषयेषु अनादिर्योग्यता यथा।*
*अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।*

इत्थं सङ्केतग्रहस्य तात्पर्यमस्ति यत् शब्दाद् अर्थावबोधः। एषा बिम्बनिर्माणक्रियाऽपि वक्तुं शक्यते। वस्तुजगता परिचयानुगुणं मस्तिष्के बिम्बः अङ्कितो भवति। यथा-यथा वस्तुबिम्बः अङ्कितो भवति तथा-तथा वाचकशब्दोऽपि मनसि अङ्कितो भवति। पदपदार्थयोः स्थिरीभूत एष एव मानससंस्कारः सङ्केतग्रहः।

सङ्केतग्रहप्रसङ्गे सामान्यतः वैयाकरण-मीमांसक-नैयायिक-बौद्धानां चर्चा भवति। साहित्यशास्त्राचार्याः प्रायः वैयाकरणमतानुयायिनः। अतः तैः जात्यादौ चतुस्सु सङ्केतग्रहः स्वीक्रियते। मीमांसकैः जातौ तथा नैयायिकैश्च जातिविशिष्टे स्वीक्रियते। अश्वशब्दोच्चारणेन सम्पूर्णपशुजातिबोधो न अपितु अश्वविशिष्टजातिमात्रस्य बोधो भवति इति न्यायमतम्। बौद्धास्तु अपोहवादिनः। तदनुसारं यदा वस्तुनामोच्चारणं भवति तदा तदतिरिक्तवस्तुजगत् आवृतं भवति।

यतो हि सदा साक्षात्सङ्केतितमुख्यार्थेन इष्टार्थप्रतीतिर्न भवति, तदा मुख्यार्थबाधे मुख्यार्थसम्बद्धार्थः रुढिवशाद् प्रयोजनवशाद् वा लक्षणया लक्षितो भवति।[23] लक्षणागम्यार्थः गौणार्थो भवति। शब्दार्थसम्बन्धस्य तृतीया स्थितिरस्ति व्यङ्ग्यस्य। एष एव प्रतीयमानार्थः यो नास्ति साक्षात्सङ्केतितार्थः न च लक्षितः गौणार्थः अपितु *'तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु'*[24]*। आनन्दवर्धनमम्मटाचार्याभ्यां प्रयोजनं लक्षणागम्यं न अपितु तृतीयशक्तिव्यञ्जनागम्यं स्वीकृतं 'व्यञ्जनान्नापरा क्रिया'*[25]। विश्वनाथाचार्यमतानुसारेण अभिधाद्यासु विरतासु यया शक्त्या अन्योऽर्थो बोध्यते सैव व्यञ्जनानामवृत्तिः।[26]

अभिधया शब्दस्य मुख्यार्थः बोध्यः लक्षणया च गौणार्थः। एवं द्वयमेतद् शब्दशक्ती किन्तु व्यञ्जना शाब्दी च आर्थी च भवति यतो हि व्यञ्जनायां न केवलं शब्दः अपितु वाच्यार्थः लक्ष्यार्थः व्यङ्ग्यार्थश्चापि परार्थबोधकाः भवन्ति। काव्यशास्त्राचार्यैः शब्दार्थसम्बन्धविवेचने शब्देन साक्षात्संकेतितः लक्षितः प्रतीयमानार्थश्चेति त्रिविधार्थबोधः मतः। तदर्थञ्च त्रिविधवृत्तयोऽपि स्वीकृताः। शब्दार्थनिरूपणे भारतीयमनीषायाः योगदानमेतद् अद्‌भुतम्।

काव्यशास्त्राचार्यैः प्रतीयमानार्थ एव काव्यात्मा मतः- *'काव्यस्यात्मा स एवार्थः'*। ये काव्यशक्तीनाम् अनेकत्वं न स्वीकुर्वन्ति तेऽपि अनेन सहमताः। *'काव्यस्यात्मनि संज्ञिनि रसादिरूपे न कस्यचिद् विमतिः'*[27] विमतिरस्ति केवलं प्रतीतिविषये। अत्रास्ति पक्षद्वयं-व्याकरणमूलकं न्यायमूलकं च। ध्वनिकारोऽस्ति वैयाकरणपक्षानुयायी। अतः मतमस्ति तस्य *'प्रथमे हि विद्वांसो वैयाकरणाः'*। वैयाकरणैः अनित्यवैखरीध्वनिना अर्थज्ञानम् अशक्यम् इति मत्वा सामान्यात्मिका नित्यवाणी कल्पिता। अनित्यनित्यवाण्योः अर्थात् अनित्यनित्यशब्दयोर्मध्ये व्यङ्ग्यव्यञ्जकभावोऽस्ति। वैयाकरणानुसारमेव काव्यशास्त्राचार्यैः अभिधेव व्यञ्जनापि भिन्नशक्तिः स्वीकृता। नैयायिकाः भिन्नत्वमेतन्न स्वीकुर्वन्ति। भट्टनायकेन व्यञ्जनास्थाने भोज्यभोजकभावः मतः। कुन्तकेनापि ध्वनिसिद्धान्तस्य खण्डनं कृतम्। किन्तु महिमभट्टेन तु व्यक्तिविवेकरचनैव एतदर्थं कृता। महिमभट्टानुसारेण तु शब्दे एकैव शक्तिः शक्या सा च अभिधैव यतो हि प्रथमं तावद् शब्दे एकाधिकशक्तयः भवितुम् अशक्याः। द्वितीयं, कर्मज्ञानसदृशमेव शब्दोऽपि तृतीयक्षणाविष्टध्वंसप्रतियोगी। प्रथमक्षणे सः उच्चरितो भवति, द्वितीयक्षणे तस्यार्थज्ञानं भवति, अनन्तरञ्च विध्वंसः। अतः मुख्यार्थबोधानन्तरं शब्दविध्वंसत्वात् लक्षणाव्यञ्जनाव्यापारस्य अवसर एव न। शब्दस्य प्रतीयमानार्थस्य च संस्कारः ज्ञानात्मक एव। ज्ञानात्मकसंस्कार एव अपरार्थप्रतीतौ कारणम्। वस्तुतस्तु मम्मटाचार्येणापि लक्षणा आरोपिता क्रिया मता। *'सा लक्षणारोपिता क्रिया'*।

शब्दे एकैव शक्तिः शक्या। अर्थवाचकता मानसाश्रितशक्तिरस्ति। मनसि एकतः शब्दज्ञानम् अन्यतः अर्थज्ञानम्। द्वयोः सम्बन्धः व्यवहारार्थमेव स्वीकृतः। महिमभट्टस्य दृष्ट्या अर्थशक्तिः शब्दशक्तिं भवितुं न शक्नोति। सा अनुमानादिवद् काव्येतरतत्त्वमस्ति। काव्यार्थेषु वाच्यार्थप्रतीतिः सर्वत्र क्रमानुसारिणी भवति, कुत्रचित् क्रम एषः दृश्यते कुत्रचिच्च अलक्षितो भवति। एतेषु व्यङ्ग्य-व्यञ्जकभावोऽस्ति न कार्यकारणभावः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

महिमभट्टेन व्यञ्जनैव न लक्षणापि एवमेव अस्वीकृता। तेन सापि अनुमानरूपैव मता 'गोत्वारोपेण बाहीके तत्साम्यमनुमीयते'।

केचिद् विद्वांसः तात्पर्यार्थनामकं चतुर्थार्थं स्वीकुर्वन्ति। भाट्टमीमांसकमतानुयायिनौ धनञ्जयधनिकौ तात्पर्याख्यवृत्तिं स्वीकुर्वन्ति। कुमारिलभट्टस्य अनुयायिनाम् अभिहितान्वयवादिनाम् एतेषाम् अभिप्रायोऽस्ति यत् प्रथमं पदैः अभिधया पदार्थबोधः, अनन्तरं वक्तुः तात्पर्यानुसारं तेषां परस्परमन्वयो भवति येन वाक्यार्थप्रतीतिः भवति। अतः तात्पर्यानुसारेण जाते सति एषः तात्पर्यार्थः। काव्यशास्त्रिभिः एषः आपाततः न अस्वीकृतः। प्रभाकरभट्टस्य अनुयायिनः अन्विताभिधानवादिनः तात्पर्यवृत्तिम् अनावश्यकीं स्वीकुर्वन्ति। तदनुसारम् अन्वितपदार्था एव अभिधया बोध्यन्ते।

इत्थं शब्दार्थसम्बन्धविषये प्राचीनशास्त्रेषु सूक्ष्मविवेचनं कृतम्। काव्यशास्त्रिणः प्रायः वैयाकरणमतानुयायिनः यैः शब्दार्थस्य लोके व्यवहारः दृष्टः। *'शब्दार्थयोरभेदेन लोके व्यवहारदर्शनात्'*। एषः लोकव्यवहारः वाक्प्रसादेनैव चलति। भुवनत्रयमिदम् अन्धावृतमेव स्याद् यदि शब्दाख्यज्योतिः तन्न दीपयेत्-

*वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।*
*इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।*
*यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।*[28]

भावप्रकटनार्थं यस्याः वाचः जननस्य वर्णनं प्राप्यते *'दैवीं वाचमजनयन्त देवाः'*[29] इति तस्याधारोऽस्ति शब्दः। चित्तवृत्तिप्रकाशनं शब्देनैव भवति। अत एव चित्तवृत्तेः शब्दानां बहिरङ्गत्वस्य अस्वीकरणमेव उचितं प्रतिभाति।

**सन्दर्भाः**


1. विनश्वरोऽस्तु नित्यो वा सम्बन्धोऽर्थेन वा सता।
   नमोऽस्तु तेभ्यो विद्वद्भ्यो प्रमाणं येऽस्य निश्चितौ। काव्यालङ्कारः, 6.14-15
2. रघुवंशम्, 1.1
3. वृहद्देवता, 2.117
4. अर्थशास्त्रम्, 2.10.28
5. शुक्लयजुर्वेदः, 8.46-47
6. महाभाष्यम् (1.2.64, वार्तिकम् 29)
7. इयं त ईदृशा वर्णा ईदृगर्थाभिधायिनः। व्यवहाराय लोकस्य प्रागित्थं समयः कृतः।।
   (काव्यालङ्कारः, 6.13)
8. 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते' (काव्यालङ्कारसूत्रवृत्तिः 1)
9. शब्दार्थौ काव्यम् (काव्यालङ्कारः, 2.1)
10. 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि'। (काव्यप्रकाशः, 1 उल्लासः)
11. शब्दार्थशरीरं तावद् काव्यम्'।
12. 'अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्'।
13. शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ च काव्यम्।
14. 'गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ काव्यम्।
15. शब्दार्थौ वपुरस्य च ....।
16. महाभाष्यम्, 1.1.2
17. निरुक्तम् 1.8.5.23
18. गोपथब्राह्मणः, 12.1.26 'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।
19. 'द्रव्यक्रियाजातिगुणभेदात्ते शब्दाः चतुर्विधाः'। (काव्यालङ्कारः, 6.21)
20. वृहद्देवता, 2.99
21. वाक्यपदीयम्, 2.330
22. वैयाकरणभूषणसारः, 6.37
23. मुख्यार्थबाधे तद्योगे रूढ़ितोऽथ प्रयोजनाद्। अन्योर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया। (काव्यप्रकाशः, 2.9)
24. ध्वन्यालोकः, आनन्दवर्धनः
25. काव्यप्रकाशः 2.14
26. विरतास्वभिधाद्यासु ययार्थो बोध्यते परः। स वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।। (सा.दर्पणः 2.19)
27. व्यक्तिविवेकः, 1.26
28. काव्यादर्शः, 1.3-4
29. ऋग्वेदः, 8.100.11


● संस्कृत विभाग, सी.एम.पी. डिग्री कालेज, इलाहाबाद



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# Sanskrit for peace study

**Subash Chandra Dash**

(समाजस्य हितं संस्कृते निहितमिति सत्यमेवोक्तं वर्तते। तत्र वस्तुत: समाजस्य हितं सर्वात्मना चित्रितमुपदिष्टं च वर्तते। सर्वासु विद्यासु उपनिषद्विद्या महत्त्वं भजते। सम्पूर्णे संस्कृत-वाङ्मये शान्तिमधिगन्तुं विविधा मार्गा उपदिष्टा:। वेदेषु, उपनिषत्सु, पुराणेषु, काव्यनाटकादिषु तथा शास्त्रेषु च शान्ति: कथमवाप्तव्येति विषये चर्चा दृश्यते। अस्मिन् पत्रे तत्तत्स्रोतसां न केवलं सङ्ग्रहणं किन्तु विश्लेषणं तथा विवेचनमपि वर्तते।)

0. Sanskrit language has contributed immensely for the growth and development of Indian wisdom and culture. Starting from the Vedic period the goal of Sanskrit literature has been fixed towards the all-round development of the humanity. All living beings should live in peace and harmony. This was the aim of our ancient seers and that is why we have got a huge bulk of creative writings in the form of different branches of Sanskrit.

i. Sanskrit is not mere a language, as it is often understood . It contains a lot of informations and theories to build human society to achieve excellence and live in peace. It can also remove the present problems like conflicts, war, terrorism, hatred, and dominance, misunderstanding and mutual killings. For this purpose, Sanskrit as a whole can be the path-finder for formulating a new dimension of innovative methods of teaching of human peace. A special branch called Sanskrit for peace studies for future growth is proposed. The time has come to take up such innovative measures of Sanskrit Studies which will certainly be fruitful in establishing peace in the world.

The present paper will highlight all the above points and suggest some solutions :

## ii. Cosmic principle

God Himself who is the unseen force in all such creations divides the entire universe into smaller and smaller sizes. They are so designed that no one disturbs the other. When there is some natural force created by the natural power then only something moves or gets distributed. Starting from the galaxies to the smallest particle on earth, every thing is governed by the principle of natural law. That law is called *ṛta* or cosmic order. This is the highest governing principle.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

Galaxies or even greater object

*ṛta* - the highest governing principle

Cosmic order

Smallest particles (*Paramāṇus*)

There is harmonious existence everywhere without any disturbance. Each and every entity remains in peace.

**iii. Creation: it's motive**

When the highest one unified energy felt that I am alone, He thought it to separate Himself in order to love Himself.[1] When there is none except Him, Who will be the next to be loved. That's why the unified energy (God) wanted to divide Him and created manifold forms. The *mantras* like *eko'haṃ bahusyāma, sa aichata, so'kāmayata* etc. came into existence. Then, one after the other, He started creating and we are the product of such a beautiful and variegated universe.

One Unified Energy

Divided into

Many

.............................................

Here the separating energy was created as per His desire and the Principle of Love was the main motive for such a colorful creation.

Principle of Love..................Chief motive of Creation

**iv. God is in every form**

When one knows the reality that the entire creation and all beings are his parts, it is obvious that He is present in all forms. The scriptures say that- *ekaṃ sad viprā bahudhā vadanti*. God is one, but He is known through various names and forms.

Everywhere — Feel the presence of God

God Realization

When this is adhered to, you would never see any enemity with others. By realizing so, you will become one with God. This is the universal Principle of God Realization.

**V. Main Obstruction**

The main obstruction to such a type of realization is the emergence of six enemies, which are present inside the human being. The feelings one has in his mind are expressed outside. They are represented through three levels of thought, speech and action.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy




## Vi. Importance on trikaraṇaśuddhi




When there is pure thought in the mind, the speech and action become pure but when there is impure thought in the mind, the speech and action become impure.

### vi.1 pure mind

A pure mind likes, loves every form of God everywhere, so all are equal to him. He has no discrimination of loving someone or hating another. Everybody is equal to him.

### vi.2 impure mind

But an impure mind does not see everybody equal. He or she feels that I and we are separate and hence different from each other. I am no way concerned with the betterment of others. Here, the discrimination starts and the love and hate are conditioned. The behavior becomes also very much conditioned and gathers information's about others. Hence, we get the varieties of fluctuated behavior. The six enemies remaining within us again control that. That is why our behavior is different and reflected in thought, speech and action levels.

### vii.1 Causes of inner conflicts

The causes of conflicts are internal and external in nature. The inner conflicts are due to one's own strict nature, preconditioned ideas struggle in the intellect. Many a times we follow as per our own conditioned behavior depending on the day to day mixings with others' viz. in one's office, neighbour, markets and fellow beings. The conflicts are due to our set of values like suspicion, hatred, fear, interference into other's affairs and domination. Which don't match sometimes with others? The individuals also suffer from some diseases, wrong food habits, unadjustive nature and use of liquors and drugs. These are major shortcomings of disharmony in a social set up.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

